॥ श्रीमन्मूलगोपालकृष्णो विजयते ॥

श्रीव्यासतीर्थग्रन्थमाला - ३

# आख्यातवादः

प्रबन्धा

विद्वान्. के.एस्. कृष्णः केम्पदाळिहळ्ळि

प्रकाशनम्

श्रीव्यासतीर्थसंशोधनप्रतिष्ठानम्

श्रीव्यासराजमठः (सोसले)

मैसूरु,

२०१९.

॥ श्रीमन्मूलगोपालकृष्णो विजयते ॥

श्रीव्यासतीर्थग्रन्थमाला - ३

# आख्यातवादः

प्रबन्धा

विद्वान्. के.एस्. कृष्णः केम्पदाळिहळ्ळि

प्रकाशनम्

श्रीव्यासतीर्थसंशोधनप्रतिष्ठानम्

श्रीव्यासराजमठः (सोसले)

मैसूरु,

२०१९.

**आख्यातवादः** -इदं ग्रन्थपुष्पं परमपूज्यव्यासराजमठाधीशैः श्रीश्रीविद्याश्रीशतीर्थ-श्रीपादैः ४८०तमे श्रीव्यासराजगुरसार्वभौमानाम् आराधनसुसन्दर्भे नववृन्दावनक्षेत्रे विलम्बिनामसंवत्सरस्य फाल्गुणकृष्णचतुर्थीतिथौ (२४.३.२०१९) श्रीव्यासराज-गुर्वन्तर्गतमुख्यप्राणस्थश्रीकृष्णाय समर्पितम्।

सङ्ग्राहकः – **विद्वान् के.एस्. कृष्णः केम्पदाळिहळ्ळि**
बेङ्गळूरु

प्रकाशनम् – **श्रीव्यासतीर्थसंशोधनप्रतिष्ठानम्**
श्रीव्यासराजमठः (सोसले)
मैसूरु.

Publication Year 2019

प्रतयः – २००

पुटसङ्ख्या – +238

Price _ Rs. 175 only

अक्षरसंयोजनम् – के.सुब्बण्ण केम्पदाळिहळ्ळि
9141311280

Printers: Manjunatha.P.,
PAVAN PRINTERS, Chamarajapet, Bengaluru
9686489131; 7406344741

॥ श्रीमन्मूलगोपालकृष्णो विजयते ॥

**जगद्गुरुश्रीमन्मध्वाचार्यमूलमहासंस्थानम्**
**श्रीराजेंद्रतीर्थपूर्वादिमठीयश्रीव्यासराजमठः, सोसले.**

दिनांक २०.०३.२०१९

## अनुग्रहसन्देशः

श्रीमन्मध्वाचार्यमूलमहासंस्थानाधीश्वराणां पदवाक्यप्रमाणपारावारपारीणानां द्वैतसत्सिद्धान्तपरिरक्षणधुरन्धराणां श्रीमद्व्यासतीर्थानाम् अस्ति महद्योगदानं शास्त्रप्रपञ्चे इति सर्वैः विदितमेव। तदिदं महद्योगदानं प्रकाशयितुमेव अस्मन्मठपक्षतः नैककार्याणि स्वीकृतानि सन्ति। तेष्विदमप्येकं कार्यं यत् श्रीव्यासतीर्थसंशोधनप्रतिष्ठानस्थापनम्। अस्माच्च श्रीव्यासतीर्थसंशोधनप्रतिष्ठानात् युवविदुषः प्रोत्साहयितुं व्यासत्रयस्थमेकं विषयं प्रदाय लघुप्रबन्धमारचयितुमवकाशः प्रकल्पितः।

प्रसक्तवर्षे के.एस्. कृष्णः इति नाम्ना युवविदुषा तर्कताण्डवस्थम् आख्यातवादः इति विषयमधिकृत्य लघुप्रबन्धः रचितः। अस्मिन् प्रबन्धे आख्यातार्थनिरूपणमपि प्रस्तुतम्। आख्यातार्थनिरूपणे च महान् मतभेदः शास्त्रेषु परिदृश्यते। मीमांसकाः नैयायिकाश्च आख्यातस्य कृत्यर्थत्वाङ्गीकारे समानमतयोऽपि शाब्दबोधनिरूपणे विप्रतिपद्यन्ते। वैय्याकरणाः पाणिनिसूत्राण्यक्षरशः अनुसरन्तो कर्त्राद्यर्थकत्वं ब्रुवन्ति। वेदान्तिष्वपि दृष्टिभेदो दृश्यते। सर्वाण्येतानि मतानि परिशील्य तर्कताण्डवकृतः नूतनमेव पन्थानमनुसरन्ति।

निरुक्तमहाभाष्यादिषु आख्यातविचारः कृतः। तदेतत्सर्वम् अनुशीलयन् मेधावी अध्ययनशीलश्च के.एस्. कृष्णः सप्रमाणं सुष्ठु आख्यातार्थविमर्शनमस्मिन् लघुप्रबन्धे कृतवानिति महानस्माकं प्रमोदः। अस्मै इतोऽपि शास्त्रज्ञानमभिवर्धतामिति अस्मदुपास्यं श्रीमूलगोपालकृष्णं प्रार्थयामहे।

इति नारायणस्मरणानि

**श्रीश्रीविद्याश्रीशतीर्थश्रीपादाः**

श्रीव्यासराजमठः, सोसले.

॥ श्रीः ॥

# निदेशकवचनम्

शास्त्रसंरक्षणे बद्धादरैः श्रीमद्व्यासराजमठ(सोसले)मठाधीश्वरैः परम-पूज्य १००८ श्रीश्रीविद्याश्रीशतीर्थश्रीपादैः अचिरादेव श्रीव्यासतीर्थ-संशोधनप्रतिष्ठानम् मैसूरुनगरे स्थापितं समेषां विदित एव । अस्माच्च प्रतिष्ठा-नात् श्रीपादानां परमानुग्रहेण युवविदुषः प्रोत्साहियतुं व्यासत्रयस्थमेकं विषयं प्रदाय, प्रबन्धमारचयितुमवकाशः प्रकल्पितः ।

अस्मिन् वर्षे "आख्यातवादः" इति तर्कताण्डवस्थविषये प्रबन्धमार-चयितुं युवविदुषे के.एस्. कृष्णः इति नाम्ने प्रतिष्ठानेन सूचितः । एतत्सूचनानु-सारेण उत्तमरीत्या प्रबन्धः एतेन विदुषा रचितः । इदानीं श्रीपादानामाज्ञानु-सारेण प्रकटीक्रियत इति महान् सन्तोषः ।

एतत्प्रबन्धं परिशील्य उपकृतवद्भ्यः विद्वद्भ्यः वन्दनानि । एवं एतत्प्र-बन्धकर्त्रे के.एस्. कृष्णाय अभिनन्दामहे ।

एवम् अक्षरसंयोजनं कृतवन्तं श्रीसुब्बण्ण केम्पदाळिहळ्ळिमहोदयाय धन्यवादाः ।

मुद्रणकर्मणि साहाय्यं कृतवते मञ्जुनाथाय धन्यवादाः

**डा ॥ डि.पि. मधुसूदनाचार्यः**

निदेशकः

श्रीव्यासतीर्थसंशोधनप्रतिष्ठानम्,

मैसूरु

श्रीमद्धनुमद्भीममध्वान्तर्गतरामकृष्णवेदव्यासात्मकलक्ष्मीहयग्रीवाय नमः ॥

## प्रकृतप्रबन्धविषये

अयि मान्याः!

गुरुदेवतानुग्रहेण **"आख्यातवादः"** इति लघुप्रबन्धोयमिदानीं भवतां पुरस्तात् उपस्थाप्यते । अयञ्च मम प्रथमः लघुप्रबन्धः ।

'आख्यातवादः' इत्यत्र आख्यातो नाम धातुप्रकृतिकः तिङ् उच्यते, तद-धिकृत्य वादः इति । आख्यातपदं च क्वचित् धातौ तिङन्तेऽपि ग्रन्थेषु व्यवहृतं दृश्यते । अत्र च प्रबन्धे, तर्कताण्डवे आख्यातो नाम तिङ् इति स्वीकृत्य, वि-चारमण्डनं विहितमिति तत्प्रधानीकृत्य निरूपितम् । एवं कुत्र आख्यातव्यवहा-रः भवेदित्यपि अत्र ग्रन्थाधारेण समर्थितं च । तदत्र प्रबन्धे प्रतिपादिताः प्रधान-विषयाः – आख्यातेतिहासज्ञानाय आख्यातव्यापकताज्ञानाय च आख्यात-विषये नैकग्रन्थवचनोल्लेखनसन्दर्भे तत्रैव आख्यातपरिचयाय क्वचित् सङ्क्षेपेण क्वचित् विस्तरेण च प्रतिपादनम्, मतभेदेन आख्यातार्थनिरूपणम्, आख्यात-व्युत्पत्तिः, आख्यातपरिष्कारः, मतभेदेन शाब्दबोधविचारः, वाक्यार्थबोधे कस्य मुख्यविशेष्यत्वम्, तर्कताण्डवोक्ते विषये एकत्र सुधाविरोधपरिहारः तत्रैव चन्द्रिकासंवादश्च, अभिनवताण्डवोक्तरीत्या शिरोमण्यादिमतभङ्गविवरणम्, एवम् आख्यातार्थस्य सङ्ख्यादेः कुत्रान्वयः, पश्य मृगो धावतीति इत्यत्र शाब्द-बोधविचारः मतभेदेन इत्यादयः, एवं प्रधानतया श्रीव्यासतीर्थविरचिते तर्कता-ण्डवे ग्रथितस्य आख्यातवादस्य सविस्तरं सविमर्शं निरूपणं ग्रन्थाधारेण प्र-स्तुतमस्ति । अपि च यदस्माभिः अश्रुतः अर्थात् प्रायः नातिपरिचितः अलङ्कारशास्त्रविशिष्टाद्वैतादिशास्त्रेषु यः आख्यातविचारः प्रस्तुतः,तस्य निरूपणे प्रयत्नः कृतः । अन्ते तर्कताण्डवरीत्या मतान्तराण्यधिकृत्य प्रतिपा-दिताः दोषाः अतीव सङ्क्षिप्तरूपेण सङ्गृहीताः ।

## कृतज्ञतासमर्पणम्

प्रथमतः मम विद्यागुरून् विश्वगुरु-यतिकुलचक्रवर्तीत्यादिबिरुदाङ्कितान् परमपूज्यान् श्रीश्रीविश्वेशतीर्थश्रीचरणान् सभक्तिश्रद्धं प्रणमामि ।

अथेदानीं कर्नाटकविद्यासिंहासने विराजन्ते श्रीमद्व्यासराजमठाधीशाः श्रीश्रीविद्याश्रीशतीर्थश्रीपादाः । एतेषां विषये एकं विषयं स्मारयितुमिच्छामि । सन्निहितकाले एव वाराणसीस्थबौद्धविश्वाविद्यालयेन "वाक्पती"ति बिरुदावल्या सम्मानिताः । इयञ्च बिरुदावलिः एतावत्पर्यन्तं बौद्धानामेव प्रदत्ता, तदियं प्रथमं एतेभ्यः संस्कृतक्षेत्रसाधकेभ्यः विद्वत्तल्लजेभ्यः पूज्येभ्यः श्रीपादेभ्यः प्राप्ता इति समेषां विदित एव विषयः ।

तदेतैः पूज्यैः अचिरादेव विदुषां कृते महन्निधिभूतं श्रीव्यासतीर्थसंशोधन-प्रतिष्ठानम् मैसूरुनगरे स्थापितं वर्तते । तदत्र श्रीपादसूचनानुसारेण "आख्यातवादः" इति तर्कताण्डवे निरूपितं विषयं मतान्तसहितं सप्रमाणं लघुप्रबन्धं रचयितुमुद्युक्तः । इदमस्ति मद्भागधेयं यत् संशोधनप्रतिष्ठानतः अयं प्रथमः लघुप्रबन्धः प्रकटीक्रियते । एवं विशिष्य श्रीपादानुग्रहेण प्रबन्धलेखने प्रवृत्तस्य मम नैकशास्त्रग्रन्थावलोकनम्, तेन च उत्तमज्ञानं प्राप्तम् ।

अपरः विषयः – आख्यातवादे प्रवेशकाले आख्यातार्थनिरूपणादिविषय एव संशोधनीयः इति मम बुद्धौ आसीत् । तत्रैव विप्रतिपत्तेः विशिष्य तर्कताण्डवे उपस्थापितत्वात् । परं एतेन सह आख्यातपदं कुत्र सङ्केतितमिति विषये च बहुधा विप्रतिपत्तिः वर्तत इति मम दृष्टिपथे आगतम् । एवमेव आख्यातविषये नैकविधां विप्रतिपत्तिं प्रदर्श्य नानामतरीत्या शाब्दबोधविचारः इत्यादयः विषयाः अपि तत्तन्मतग्रन्थानुरोधेन प्रस्तुताः । तत्र तत्र प्रबन्धे स्वमनीषिकया विमर्शोपि कृतः ।

एवं बुद्धिशोधानुकूलं प्रबन्धरचनं श्रीपादानुग्रहेण सम्पन्नम्। एतादृशाव-काशं दत्तवद्भ्यः श्रीपादेभ्यः अनन्तप्रणामान् सभक्तिश्रद्धं समर्पयमामि।

एवमिमं प्रबन्धं स्वसमयाभावेऽपि दिनद्वयाभ्यन्तरे एव अभिवीक्ष्य सूचनां दत्त्वा अनुग्रहं कृतवद्भ्यः राष्ट्रपतिप्रशस्तिपुरस्कृतेभ्यः विद्वत्तल्लजेभ्यः प्रो. ए. हरिदासभट्टमहोदयेभ्यः सभक्तिश्रद्धं प्रणमामि।

अपि चैवं प्रबन्धं दिनद्वयाभ्यन्तरे एव संवीक्ष्य सूचनां दत्त्वा अनुग्रहं कृ-तवद्भ्यः विद्वान् डा॥ तिरुमलकुलकर्णीमहोदयेभ्यः सभक्तिश्रद्धं प्रणमामि।

अथ चैवं प्रबन्धविषये प्रतिदिनं मां प्रबोध्य, उत्साहिनं विधाय, नैकविधां सूचनां प्रदाय च प्रबन्धपूरणे महत्पात्रभूतेभ्यः मातापितृभ्यः रमादेविसुब्बण्णम-होदयेभ्यः सादरं प्रणमामि।

एवं टङ्कणकर्मणि, सुन्दररूपेण अक्षरपुटविन्यासादिकं कृतवद्भ्यः मम पितृभ्यः श्रीसुब्बण्ण केम्पदाळिहळ्ळिमहोदयेभ्यः सादरं प्रणमामि।

तथैव मुद्रणकर्मणि साहाय्यं कृतवते पि. मञ्जुनाथमयोदयाय (पवन् प्रि-ण्टर्स्) धन्यवादः।

**के.एस्. कृष्णः**

# विषयानुक्रमणिका

* * * * *

श्रीमद्धनुमद्भीममध्वान्तर्गतरामकृष्णवेदव्यासात्मकलक्ष्मीहयग्रीवाय नमः ।।
श्रीमूलगोपालकृष्णो विजयते ।।
श्रीव्यासराजो विजयते ।। श्रीशेषचन्द्रिकाचार्यगुरुभ्यो नमः ।।

# प्रस्तावना

भारतीयदर्शनेषु अस्ति द्वैविध्यम् । आस्तिकदर्शनं नास्तिकदर्शनं चेति । आस्तिकदर्शनेषु वेदान्तदर्शनमेकम् । तत्र द्वैतवेदान्तदर्शनम् एकम् । अस्मिन् दर्शने प्रमेयसाधनाय प्रमाणत्रयमेव अनुसृतम् । प्रत्यक्षम्, अनुमानम्, आगम इति । अत्र आगमप्रमाणं नाम शब्दप्रमाणम् । अस्य प्रत्यक्षानुमानापेक्षया विशिष्टं स्थानमस्ति इति सर्वैरप्यङ्गीकृतमेव । तदेतद् दण्डिनाप्युक्तम् –

**इदमन्धतमः कृत्स्नं जायेत भुवनत्रयम् ।**
**यदि शब्दाह्वयं ज्योतिः आसंसारं न दीप्यते ।।**

एवं शबरेण च स्वभाष्ये – "चोदना हि भूतं, भवन्तं, भविष्यन्तं, सूक्ष्मं, व्यवहितं, विप्रकृष्टम् इत्येवंजातीयकमर्थं शक्नोत्यवगमयितुम्, नान्यत् किञ्चने-न्द्रियम्" ति शब्दप्रमाणस्य महत्त्वं निरूपितम् ।

अयं भावः एतेन दण्डिवचनेन शबरवचनेन च गम्यते – यो यः लोके व्यवहारः स च अधिकं शब्देन भवति । एवं शब्दाभावे च न धर्माधर्मव्यवस्था-इत्यादिः । शब्दाश्च वैदिकाः लौकिकाः इति विभक्ताः । तत्र शास्त्रीयग्रन्थाः वेदादयः, लौकिकाश्च व्यवहाराश्च सर्वे शब्दरूपा एव । तथा च शब्दसमूहाद् वाक्यात् वाक्यार्थः अवगम्यत इति अस्माभिरनुभूयत एव । परन्तु वाक्यार्थः कथमवगम्यते? इति विषये महत्कुतूहलमस्ति शास्त्रकाराणाम् । यथा आख्यातादिपदार्थः कः? वाक्यजन्यबोधस्याकारः कः? तत्र कस्य मुख्यत्वम्? इत्यादिरीत्या । एतद्विचारेण व्यवहार-अतिप्रसङ्ग-परिहारः, शब्दप्रयोगातिप्र-

सङ्गपरिहारः इत्यादीनि प्रयोजनानि। एवमनेन वेदादर्थबोधोपि स्फुटीभवति। तेन च महाफलावाप्तिश्च । परमेतदर्थं लौकिकाः शब्दाः प्रथमतः कमर्थं बोधयितुं समर्थाः इति निर्णेयाः भवन्ति। यथोक्तम् – "लोकावगतसामर्थ्यः शब्दः वेदेऽपि बोधकः" इति । यथा आख्यातविषये उदाहरणम् – पचति, वर्धते इत्यादिस्थलेषु आख्यातार्थनिर्णये (तिङर्थनिर्णये) सत्येव "ओषधयः संवदन्ते सोमेन सह राज्ञा" इत्यादिवाक्येषु अयमेव आख्यातार्थः भवितुमर्हतीति निर्णयः स्यात् (आख्यातार्थनिर्णयेपि तत्रानुपपत्तिः वर्तते वा न वा इत्यन्यो विषयः। उद्देशस्तु वेदेपि वाक्यार्थबोधनिर्णये आनुकूल्यं भवति इति भावः)। परं लौकिकप्रयोगेष्वेव आख्यातार्थविषये बहुधा विप्रतिपत्तिः शास्त्रज्ञेषु दृश्यते। अतः सा प्रथममपनोदनीया। अतः आख्यातविचाराय प्रबन्धं रचयितुम् अवसरः।

तदत्र आख्यातवादः इत्येव श्रीव्यासतीर्थविरचिते तर्कताण्डवे प्रत्येकं विचारः प्रस्तुतः। तत्र च ग्रन्थे अनेकानि मतानि अनूदितानि, खण्डितानि च। तदनुकूलतया अत्र प्रबन्धे आदौ आख्यातव्यापकतादिविषये किञ्चिद् प्रदर्श्य, अनन्तरं विस्तरेण तत्तन्मतानुसारेण आख्यातवादं निरूप्य, ततः परं तर्कताण्डवाद्युक्तानि मतानि विश्लेषितानि।

अत्रायं विषयक्रमः अनुसृतः –

**"आख्यातपरिभाषणम्"** इति विभागे अनेकेषु मतेषु आख्यातपदमुल्लिखितमिति प्रदर्शितम्। क्वचिदाख्यातपदाभावेऽपि आख्यातपदबोध्यलकारतिङादिपदानि सन्तीति तदपि उल्लिखितम्। एवं तत्र तत्र उल्लिखितवचनानामर्थविवरणमपि सविस्तरं प्रबन्धोपोद्घातरूपेण प्रतिपादितम्। अनेन आख्यातपदव्यापकता, आख्यातेतिहासः, आख्यातार्थः, आख्यातपदसङ्केतः कुत्र? इत्यादिरवगम्यते। एतदर्थमेव अस्मिन् विभागे अनेकग्रन्थवचनानि

उल्लिखितानि। अयञ्च विभागः अग्रे प्रबन्धनिरूपणे बहूपयुक्तः इति आदौ निवेशितः।

**"आख्यातव्युत्पत्तिः"** इति विभागे आख्यातव्युत्पत्तिप्रदर्शनेन तत्पदं तिङम्बोधयति, तिङन्तं बोधयति, धातुं बोधयति इति निरूपितम्।

**"आख्यातपरिष्कारः"** इति विभागे मतभेदेन आख्यातपरिष्कारः सुबोधाय सङ्गृहीतः।

**आख्यातपदं किं धातुपरम्? उत तिङ्-परम् आहोस्वित् तिङ्धातूभयपरम्?** – इति विभागे आख्यातपदं नियमेन कस्यापि वाचकं न भवितुमर्हतीति, तत्तन्मतानुसरेण ग्रन्थोल्लेखपुरःसरं सप्रमाणं निरूपितम्। अत एवात्र तिङन्त एव आख्यातप्रयोगः? अथवा तिङ्मात्र एव आख्यातप्रयोगः? इति ये वदन्ति तेषां मतं विचारणीयमित्यपि प्रस्तुतम्।

**भावप्रधानमाख्यातम् इत्यस्य कोऽर्थः?** – इति विभागे भावप्रधानमाख्यातम् इति यास्कवचनस्य मतभेदेन अर्थनिरूपणम् एकत्र सङ्गृहीतम्।

**नैयायिकमतप्रमेयसङ्ग्रहः** – इति विभागे नैय्यायिकमतानुसारं वाक्यार्थबोधे कस्य मुख्यविशेष्यत्वं आख्यातपदस्य वाक्ये नियमेनाप्रयोगः, प्रकृतिप्रत्ययाद्यर्थविवेचनम्, कस्य कुत्रान्वयः?, प्रथमान्तार्थमुख्यविशेष्यकबोधे किं प्रमाणम्?, निरुक्तवचनाविरोधित्वम्, 'पश्य मृगो धावति' इति वाक्यस्यार्थः, वैय्याकरणमीमांसकादिशास्त्रकाराणामाक्षेपः तत्समाधिः, नैय्यायिकमते सर्वत्रप्रथमान्तार्थमुख्यविशेष्यकबोध एव इति न नियमः इत्यादयः विषयाः निवेशिताः।

**वैय्याकरणमते आख्यातवादः** – इति विभागे वैय्याकरणमतानुसारमाख्यातपदस्य अवश्यकता, वाक्यार्थबोधे कस्य मुख्यविशेष्यत्वम्?, शाब्द-

बोधः, भावप्रधानमाख्यातम् इति वचनार्थः, धात्वर्थमुख्यविशेष्यकबोधे मूलप्रमाणोपन्यासः, "पश्य मृगो धावति" इत्यस्य वाक्यस्यार्थः इत्यादयः विषयाः निरूपिताः ।

**मीमांसकमते आख्यातवादः** – इति विभागे मीमांसकमतानुसारं 'भावप्रधानमाख्यातम्' इति वाक्यस्यार्थः मतान्तरविवृतः अयुक्तः, स्वमतरीत्या अर्थः, आख्यातप्रथमाविभक्त्यभिहितकर्तृत्वस्य भिन्नरूपत्वम्, नैय्यायिकमते आक्षेपोद्भावनम्, आख्यातस्य कर्तरिकर्मणि च निरूढलक्षणा इत्येवमादयः विषयाः संयोजिताः ।

**अलङ्कारशास्त्रे आख्यातवादः** – इति विभागे आलङ्कारिकमतानुसारं 'भावप्रधानमाख्यातम्' इत्यस्यार्थः, रसगङ्गाधरे निरूपितः शाब्दबोधः, आलङ्कारिकैरपि पतञ्जल्यादिमुनिवचनमादृतम्, अलङ्कारशास्त्रं स्वतन्त्रम्, अलङ्कारशास्त्रे आख्यातार्थः इत्येवमादयः विषयाः निबद्धाः ।

**विशिष्टाद्वैतमते आख्यातवादः** – इति विभागे विशिष्टाद्वैतमतानुसारम् आख्यातार्थः, शाब्दबोधः इत्यादयः विषयाः निरूपिताः ।

**द्वैतवेदान्ते आख्यातवादः** – इति विभागे द्वैतवेदान्तमतानुसारम् तर्कताण्डवोक्तः आख्यातविचारः सर्वोऽपि प्रस्तुतः । अत्र सुधाविरोधपरिहारः, चन्द्रिकासंवादः इत्यादयः निरूपिताः । श्रीसत्यनाथतीर्थविरचिते अभिनवताण्डवे उल्लिखितः सर्वोप्याख्यातविचारः प्रस्तुतः । अत्र स्वमनीषयापि तत्र तत्र विमृश्य नैके विषयाः लिखिताः ।

**उपसंहारः** - इति विभागे तर्कताण्डवाद्यनुसारं परमते उद्भाविताः दोषाः एकत्र सङ्क्षेपरूपेण निबद्धाः ।

* * * * * *

# आख्यातपरिभाषणम्

## वैदिकग्रन्थेषु

**गोपथब्राह्मणे** – ओङ्कारं पृच्छामः । को धातुः? किं प्रातिपदिकम्? **किं नाम आख्यातम्?** किं लिङ्गम्? किं वचनम्? कः प्रत्ययः? कः स्वरः, उपसर्गः, निपातः? किं वै व्याकरणम्? को विकारः? को विकारी? कति मात्रः?[(1)] कति वर्णः? कत्यक्षरः, कति पदः? कः संयोगः? किं स्थाननादअनुप्रदान- अनुकरणम्?[(2)] (प १/२०)

**प्रातिशाख्ये** – 'तन्नाम येन अभिदधाति सत्वं तदाख्यातं येन भावं सधातुः । क्रियावाचकमाख्यातम्' इति विवरणावसरे तद्भाष्यकारः "सधातुरिति" तृतीयार्थे प्रथमा इति विवृण्वन् तिङन्तपरमेव अङ्गीकरोति । तथा हि – येन सधातुना भावमभिदधाति (पुरुषः) तदाख्यातम् - इति ।

**निरुक्ते** – भावप्रधानमाख्यातम् । (१अ.१ख)[(3)]

अत्र विवरणम् – प्रकृत्यंशः धातुरेव आख्यातपदग्राह्यः । तत्सहपठिते वाक्ये 'सत्वप्रधानानि नामानि' इति प्रकृतेरेव नामशब्देन उपादानात् । अत्रापि सहचरितासहचरितन्यायेन प्रकृतेरेव स्वीकारस्य औचित्यात् ।

'सत्वप्रधानानि नामानि' इत्यत्र निरुक्तभाष्ये – 'प्रकृतिः प्रत्ययः

---

(1) अत्र कतिमात्रकतिवर्णकत्यक्षरकतिपदः इति पाठेन भाव्यम् इति भाति । अथवा कति मात्रा, कति वर्णाः ..... इति पाठेन भाव्यम् ।

(2) गोपथब्राह्मणम् - by Rajendralalamitra; Hemchandravidyabhushan, Calcutta, 1872 A.D. (p.12)

(3) (*) निरुक्तम् - अज्मेर् नगरे वैदिकग्रन्थालये मुद्रितम् - संवत् १९७६ (पु.१)

विभक्तिः' इत्येतावन्नाम सत्ता द्रव्यं लिङ्गं सङ्ख्या इति नामार्थ इति सुबन्तग्रहणात् आख्यातपदं तिङन्तपरमिति स्वीक्रियते ।

* "चत्वार्याहुः पदजातानि । नाम-आख्यात-उपसर्ग-निपाताः" इत्यनन्तरं "सत्वप्रधानं नाम भावप्रधानम् आख्यातम् "। अत्र आख्यातपदं तिङन्तपरम् । अत एव तद्भाष्ये – "भावकालकारक- सङ्ख्याः चत्वारो अर्थाः आख्यातस्य । तत्र भावः प्रधानम्" - इत्युक्तिः ।

**निरुक्तभाष्ये** – 'यत्रोभे भावप्रधाने भवतः' इत्यवसरे – "नामाख्यातयोः परस्परविनाभूतयोः स्वस्वपदार्थोक्तौ एकस्य भावप्राधान्यम् । अन्यस्य सत्वप्राधान्यम् । अथ पुनः यत्र वाक्ये ते उभे नामाख्याते भवतः । तत्र वाक्ये भावप्रधाने आख्यातार्थप्रधाने । वाक्ये हि आख्यातं प्रधानम् । तदर्थत्वात् गुणभूतं नाम । तदर्थस्य भावनिष्पत्तौ अङ्गत्वात् । एवं तावद् वाक्ये आख्यातं प्रधानम् ।"

## पुराणेषु

**अग्निपुराणे –**

**शब्दसास्त्रविरुद्धत्वमसाधुत्वं विदुर्बुधाः ॥४॥ ....**

**स्कन्द उवाच**

**वक्ष्ये व्याकरणं सारं सिद्धशब्दशब्दस्वरूपकम् ।**
**कात्यायनविबोधाय बालानां बोधनाय च ॥१॥**

**– ३४९ अ.**

**विभक्तिसिद्धरूपश्च कात्यायन वदामि ते ।**
**द्वे विभक्ती सुप्तिङश्च सुपः सप्त विभक्तयः ॥१॥...**

एकार्थे चैकवचनं द्व्यर्थे द्विवचनं भवेत् ॥२८॥

बहुषु भहुवचनं सिद्धरूपाण्यथो वदे । —३५१ अ.

तिङ्विभक्तिं प्रवक्ष्यामि तथादेशं समासतः ।
तिङस्त्रिष्वपि वर्तन्ते भावे कर्मणि कर्तरि ॥१॥
सकर्मकाकर्मकाच्च कर्तरि द्विपदे स्मृताः ।
सकर्मकात् कर्मणि च तदादेशस्तथेरितः ॥२॥

वर्तमाने लडाख्यातो विध्याद्यर्थे लिङीरितः ।
विध्यादौ लोडाशिषि च भूतानद्यतने च लङ् ॥३॥

भूते लुङ् लिट् परोक्षेऽथ भाविन्यद्यतने च लुट् ।
लिङाशिषि च शेषार्थे लृङ्भविष्यति लृङ् भवेत् ॥४॥

लिङ् निमित्ते क्रियातिपत्तौ परे नवात्मने पदम् । .......

—३५८ अ.

कर्तरि क्तादयो ज्ञेया भावे कर्मणि च क्वचित् ॥५॥ ....
शतृङ्-शानचौ भवन् एधमानो भवन्त्यपि ।
वुण्-तृचौ सर्वधातुभ्यो भावको भविता तथा ॥६॥[1]

—३५९ अ.

* * * * *

---

(1) अग्निपुराणम् - पण्डितश्रीयुक्तपञ्चाननतर्करत्नेन सम्पादितम् । कालिकाता-राजधान्याम् अरुणोदयरायेण प्रकाशितम् शकाब्दाः १८१२

## व्याकरणग्रन्थेषु

**महाभाष्ये**[1] –

'प्रशंसायाम्' इति सूत्रे (५.३.६६) – 'आख्यातेन एका क्रिया अभिधीयते' - इति । अनेन ज्ञायते 'क्रियावाचकोऽयमाख्यातः धातुरेव' इति ।

'मयूरव्यंसकादयश्च' इति सूत्रे(२.१.७१) "अश्नीत पिबत इत्येवं सततम् अभिधीयते या सा अश्नीतपिबता, पचतभृज्जता, खादतमोदता" इति तिङन्तउदाहरणेन इदं ज्ञायते 'आख्यातपदं तिङन्तपरम्' इति ।

अस्मिन् मते अर्थात् पूर्वोक्तरीत्या (समनन्तरोक्तरीत्या) तिङन्तपरमाख्यातपदम् इति मते "सर्वमाख्यातजं नाम" इत्यत्र आख्यातपदेन लक्षणया तदेकदेशः धातुः गृह्यते इति बोध्यम् ।

"क्रियाप्रधानमाख्यातम्" - इति च महाभाष्ये अपरत्र "भावप्रधानमाख्यातम्" इति निरुक्तवचनसमानार्थकं वचनमुल्लिखितम् ।

कात्यायनमतम् "अपर आह- आख्यातं सविशेषणम्" इति महाभाष्ये उल्लिखितम् ।

**उद्योतव्याख्याने (महाभाष्य)** । 'चत्वारिशृङ्गा त्रयो अस्य पादाः' इत्यत्र पस्पशाह्निके भाष्ये 'चत्वारि शृङ्गाणि' इत्यस्य विवरणकाले चत्वारि पदजातानि इति विलिख्य 'नामआख्यातउपसर्गनिपाताश्च' इत्यत्र 'आख्यातं तिङन्तम्' इति विवृतम् । (भाष्ये च पदजातानि इति शब्दस्वारस्यात् सुप्तिङन्तम् इति अनुशासनबलेन सुबन्ततिङन्तान्यतरस्यैव पदत्वस्वीकारात् प्रकृते आख्यातपदं तिङन्तपरमिति प्रतीयते) ।

---

(1) श्रीमद्भगवत्पतञ्जलिमुनिविरचितं व्याकरणमहाभाष्यम् - राष्ट्रियसंस्कृतसंस्थानम् - २००६

'चत्वारिवाक् परिमितानि पदानि' इति मूले पदशब्दः स्पष्टं श्रूयते । तत्रापि 'चत्वारि पदजातानि नाम-आख्यात-उपसर्ग-निपाताश्च' इति भाष्ये विवरणं दृश्यते ।

**वैय्याकरणभूषणसारे**[1] –

**धात्वर्थनिर्णयप्रकरणे** "फलव्यापारयोः धातुः" इति धातुना व्यापारोपि वाच्यः इति प्रतिज्ञाय व्यापारश्च फूत्कारत्वाधःसन्तपनत्वयत्नत्वादि तत्तद्रूपेण वाच्यः, तथैव "पचती"त्यादौ तत्तप्रकारकबोधस्य अनुभवसिद्धत्वात् - इत्युक्तम् । ततः नानार्थकत्वमापाद्य तदादिशब्दवत् अत्रापि अनुगमकमस्तीति समाहितम् । तत्रेदं वाक्यम् – "आख्याते क्रियैकत्वव्यवस्था अप्यवच्छेदकबुद्धिविशेषैक्यमादायैव" (अवच्छेदकेति – फूत्कारत्वादिनिष्ठा या शक्यतावच्छेदकता तदवच्छेदको यो बुद्धिविशेषः तद्गतैकत्वं क्रियायामारोप्येत्यर्थः । सा च बुद्धिः फूत्कारादिविषयकसमूहालम्बनरूपा एकैव, यद्वा बुद्धिविषयसमूहगतैक्यारोपेणेत्यर्थः ।) इति ।

अत्र प्रभाव्याख्यायामयं विषयः प्रतिपादितः । "आख्याते क्रियैकत्वेति" इति प्रतीकमुद्धृत्य अत्राख्यातपदेन धातोरेव ग्रहणम् न तु तिङन्तस्य । कृदन्तेऽपि धातूपस्थाप्यक्रियायाः तथात्वात् । घञाद्युपस्थाप्यक्रियायां तु एकत्वान्वये बाधकाभावात् ।

अत एव "नामाख्यातोपसर्गनिपाताः" इति भाष्ये निरुक्ते च प्रकृतित्वेनोल्लेखः । अत एव "नामान्याख्यातजानि" इति शाकटायनः ।

---

(1) Vaiyakarna bhushanasara of Kaundabhatta, edited by Sri Balakrishna Pancholi, Chaukambha Sanskrit Sansthan, Varanasi, 2006 A.D.

'आख्यायते अनेन' इति आख्यातम् । अत्र आङ् क्र ख्या (प्रकथने) बाहुलकात् करणे क्तप्रत्ययः । सर्वप्रधानीभूतार्थप्रत्यायकत्वं यस्य तस्यैव आख्यातपदवाच्यत्वम् । अर्थात् प्रकृतिरूपः धातुरिति ।

'आख्यातम् आख्यातेन' इत्यत्र तु धातुप्रकृतिकतिङन्ते लक्षणा। 'द्वितीयाश्रित ...' इत्यादौ श्रितादीनां यथा श्रितादिप्रकृतिसुबन्ते । न च भाष्ये, शाकटायनोक्तौ च तिङन्तवाचकाख्यातशब्दस्य धातौ लक्षणा, अनेकत्र लक्षणास्वीकारे गौरवात्। "भावप्रधानमाख्यातम्" इत्यत्रापि आख्यातपदेन धातुरेव ग्राह्यः। "सत्वप्रधानानि नामानि" इत्यत्र प्रकृतेरेवोपादानात् तत्रापि तत्वस्यैवोचितत्वात्। व्याकरणे क्वचित् तिङन्तस्य ग्रहणम्, क्वचिद्धातोरिति नैय्यायिकानामाख्यातपदेन तिङो ग्रहणम् सर्वथा हेयमेव ।

नैय्यायिकमतनिरूपणावसरे मूलस्थं वाक्यम् – नन्वनयोराख्यातार्थत्वे किं मानम् इति । अनेन तिङ्प्रत्ययस्य आख्यातपदवाच्यता स्वीकृता स्फुरति । अत्र प्रभाकर्ता आख्यात इति प्रतीकमुद्धृत्य 'आख्यातपदं तिङ्बोधकमिति नैय्यायिकवासनाभिप्रायेणेदम् । वैय्याकरणनिकाये धातुतिङन्तान्यतरबोधकत्वस्यैव स्वीकारात्' इति ।

तस्मिन् प्रयोगे यः आख्यातार्थ इत्यस्य आवश्यकत्वेन आख्यातशून्ये देवदत्तः पक्ता इत्यादौ देवदत्तस्य अकर्तृत्वापत्तेरिति तिङन्तरहितमपि वाक्यमित्यभिप्रायेण प्रयोगात् आख्यातपदं तिङन्तपरमिति ज्ञायते ।

**शाकटायनग्रन्थे** – 'आख्यातजानि नामानि' इति ।

**शब्दरत्ने**[1] – 'आख्यातपदेन तिङन्तस्य ग्रहणम्' इत्याहुः ।

(1) प्रौढमनोरमा - काशी संस्कृत ग्रन्थमाला - चौखम्बा संस्कृतसंस्थान - २००३

अत्र वाक्ये पाठद्वयमवलम्ब्य अर्थप्रदर्शनम् एवं कृतम् – 'आख्यातक्रिया' 'आख्याते क्रिया' इति । उभयत्रापि अयमर्थः – प्रथमपक्षे आख्यातशब्देन धातोर्ग्रहणे तद्वाच्यक्रिया इत्यर्थः । तिङन्तग्रहणे तु कथं व्याख्या? इत्युक्ते, एवम् – तिङन्तजन्यशाब्दबोधविषयीभूता इत्यर्थः । अन्यथा यत्र पदस्य शक्तिः तत्रैव तद्वाचकत्वव्यवहारात् । तिङन्तस्य क्रियावाचकत्वाभावात् । प्रकृतासङ्गतिः । द्वितीयपक्षे आख्यातपदस्य आख्यातवाच्यविषया क्रिया इत्यर्थः बोध्यः ।

**वाक्यपदीये(1) –**

**आख्यातं तद्धितकृतोः(2) यत्रार्थस्योपदर्शकम् ।**
**गुणप्रधानभावस्य तत्र दृष्टो विपर्ययः ।**

अयमभिप्रायः – अयं च श्लोकः "क्वचिद्गुणप्रधानत्वमर्थानामविवक्षितम्" इत्येतदर्थप्रतिपादनावसरे उपनिबद्धः । अस्य व्याख्यानं दीक्षितादिभिः नागेश-भट्टेन च व्यधायि । 'लोके स्वातन्त्र्येणार्थबोधनार्थं प्रयुक्ते वाक्ये धात्वर्थमुख्य-विशेष्यक एव बोधः इति तत्र यथास्थितः एव विशेषणविशेष्यभावः । वृत्तिवि-ग्रहयोः समानार्थत्वनिर्वाहाय वृत्त्यर्थप्रतिपादनाय प्रयुक्ते लौकिकविग्रहवाक्ये तु कर्तृविशेष्यक एव बोधो भवति' – इति नागेशाशयः ।

"देवदत्तो अक्षैर्दीव्यति" इति स्वातन्त्र्यैणार्थबोधनाय प्रयुक्ते वाक्ये धा-त्वर्थव्यापारमुख्यविशेष्यक एव बोधः, "आक्षिकः" इत्येतद् तद्धितार्थविवर-

---

(1) आचार्यभर्तृहरिप्रणीतं वाक्यपदीयम् - सम्पूर्णानन्दसंस्कृतविश्वविद्यालयः - वाराणसी - १९८९

(2) आख्यातं तद्धितार्थस्य यत्किञ्चिदुपदर्शकम् अथवा आख्यातं तद्धितकृतोः यत्किञ्चिदुपदर्शकम् - पा.

णाय प्रयुक्ते लौकिकविग्रहवाक्ये कर्तृमुख्यविशेष्यक एव बोधः। एवञ्च विपर्ययः तद्धितार्थप्रतिपादनाय कल्पितलौकिकविग्रहवाक्ये इति नागेशाशयः। अत्र "तत्र दृष्टः" इत्यत्र तत्र इत्यस्य ईदृशार्थः अभिमतः नागेशेन। दीक्षितेन च तद्धिते विपर्ययो दृष्टः इति मन्यते। वस्तुतः अत्रार्थे "तद्वहति रथयुगप्रासङ्गम्" (पा.सू.४-४-७६) इति सूत्रस्थभाष्यमेव प्रमाणमिति बोध्यम्।

**परमलघुमञ्जुषायां धात्वर्थनिरूपणम् इति प्रकरणे** – "भावप्रधानमाख्यातम्, सत्वप्रधानानि नामानि इति निरुक्तोक्तेः व्यापारविशेष्यको बोधः। तत्र तिङ्वाच्यं सङ्ख्याविशिष्टं कारकम्, कालश्च व्यापारविशेषणम्" इति।

अयं भावः – भावप्रधानमाख्यातमित्यत्र भावः = क्रिया; प्रधानं यस्मिन् तत् भावप्रधानम् आख्यातम्। भावोऽत्र क्रिया । सा च करणव्युत्पत्त्या व्यापारं बोधयति, कर्मव्युत्पत्त्या च फलं बोधयति । एवञ्च आख्याते फलव्यापारयोः प्राधान्यम् इति फलति। अनेन व्यापारमुख्यविशेष्यकबोधो भवति वैय्याकरणानां मते इति ज्ञायते। यद्यपि तन्निरुक्तिबलात् तिङन्तमेव व्यापारफलप्रधानकमिति लभ्यते, न तु तिङन्तघटितवाक्यम्। तथापि "भावप्रधानमाख्यातम्, सत्वप्रधानानि नामानि" इति तिङन्तस्य भावप्रधानकत्वं, नाम्नः अर्थात् सुबन्तस्य धर्मिप्रदानकत्वमिति प्रतिपाद्य "यत्रोभे तत्र भावप्रधाने भवतः" इति अग्रिमनिरुक्तवचनात् वैय्याकरणैरेवं सिद्धान्तितम्। अस्य विवरणम् – यत्र उभे, नाम यत्र तिङन्तं सुवन्तमुभयं च वर्तते तत्र भावप्रधाने भवतः इति यथा 'चैत्रः तण्डुलं पचति' इत्यादिवाक्येषु । एवमग्रिमनिरुक्तग्रन्थानुसारेण भावप्रधानमाख्यातमित्यस्य धात्वर्थमुख्यविशेष्यकबोधे प्रमाणपरतया व्याख्यायते वैय्याकरणैः।

एवं भूवादिसूत्रस्थक्रियाप्राधान्यबोधकभाष्याच्च पचतिभवतीति वाक्यमादाय पचिक्रिया भवतिक्रियायाः कर्त्री भवतीति प्रतिपादितम्। यदि धात्वर्थप्रा-

धान्यं न स्यात् तदा पचतिभवतीतिस्थले पाकक्रियाकर्ता यः कश्चन वर्तते तस्य भवतिक्रियायां कर्तृत्वेनान्वयो वक्तव्यः स्यात् । किन्तु भाष्यकृता पचिक्रिया भवतिक्रियायाः कर्त्रीति प्रतिपादितम् । ततश्च धात्वर्थक्रियायाः पाकस्य प्राधान्ये एव एतत् सङ्गच्छते इति वैय्याकरणानां मते व्यापारमुख्यविशेष्यकशाब्दबोधो भवतीति गम्यते ।

अत्र मूले "तिङ्वाच्यम्" इत्यनेन कर्तृकर्मसङ्ख्याकालरूपार्थाः गृह्यन्ते । तत्र सङ्ख्या कर्तृप्रत्यये कर्तरि कर्मप्रत्यये कर्मणि अन्वेति । तद्विशिष्टकर्तुश्च धात्वर्थव्यापारेऽन्वयः इति ज्ञेयम् ।

**परमलघुमञ्जूषाव्याख्यायां**[1] **तत्वप्रकाशिकायाम्** – 'भास्करानुयायिमते फलमेव धात्वर्थः । भावना तु वाच्यैव न । तद्विषयकशाब्दबोधस्य सर्वत्र अननुभवात् । किन्तु लिङेव परं सा आख्यातवाच्या ।' इति यद्भास्करानुयायिमतं तन्नसत् । 'कर्तरि कृत्' इत्यत एव कर्तृग्रहणस्य 'लःकर्मणि' इत्यत्रानुवृत्या तिङ्कृतोः वैषम्यस्य दुरुपपादत्वात् ।

अत्रैवाग्रे यत्नातिरिक्तः फलानुकूलो व्यापारो धात्वर्थः, यत्नः आख्यातार्थः, धात्वर्थे कारकान्वयः - इति "तत्तु समन्वयात्" इति सूत्रस्थवाचस्पत्यादिग्रन्थेभ्यः लभ्यमानं यद्गुरुमतं तदपि भूषणकारोक्त यत्नाख्यातार्थत्ववादि नैय्यायिकमतदूषणग्रस्तम् इत्यभिप्रेत्य स्वमतं निर्दिशति नागेशः "तत्र फलानुकूलो यत्नसहितो व्यापारो धात्वर्थः" इति ।

**अभिधानचिन्तामणौ** – (हेमचन्द्रकृते) – "सविशेषणम् आख्यातं वाक्यम्" इति ।

---

(1). नागेशभट्टप्रणीता परमलघुमञ्जूषा - चौखम्बा अमरभारती प्रकाशन, वाराणसी - १९८१ (पु.८४)

## न्यायग्रन्थेषु

**वात्स्यायनः**[1] – "विभक्त्यन्ताः पदसञ्ज्ञाः भवन्ति । विभक्तिः द्वयी । नामिकी आख्यातकी च । 'ब्राह्मणाः, पचति' इति उदाहरणम्" – इति ।

**न्यायवार्तिककारोऽपि** असन्दिग्धं ब्रूते – "ते विभक्त्यन्ताः पदम् (न्या. सू. २-२-५७) इत्यत्र द्वयी विभक्तिः स्वादयः तिबादयश्च । तत्र स्वाद्यन्तं नाम, तिबाद्यन्तम् आख्यातम्" - इति ।

**न्यायभाष्यकारोऽपि** – 'प्रकृतादर्थात् असम्बद्धार्थम् अर्थान्तरम्' (न्या.सू. ५-२-७) इत्यत्र आख्यातलक्षणमेवमाचष्टे – 'क्रियाकालयोगाभिधायि आख्यातं धात्वर्थमात्रं च कालाभिधानविशिष्टम्' इति । **न्यायवार्तिककारश्च** – 'क्रियाकालयोगाभिधायि क्रियाप्रधानमाख्यातम्, यथा पचति' इति विवृण्वन् आख्यातपदार्थं स्पष्टं मनुते ।

**न्यायमञ्जर्याम्**[2] (पु.६६) –

> **'आख्यातानां तु वाच्योऽर्थो पुरस्तात् चर्चयिष्यते ॥'** – इत्याख्यातार्थविवरणं पुरस्तादुच्यते इति प्रतिज्ञातम् । अत्र आख्यातपदोल्लेखः पञ्चमाह्निके वर्तते ।

एवमपरत्र पञ्चमाह्निके क्रियायाः वाक्यार्थत्वपक्षः, फलस्य वाक्यार्थत्वपक्षः इत्येवमनेकपक्षान् अनूद्य, खण्डयित्वा, पुरुषस्यापि वाक्यार्थत्वं नास्तीति

---

(1) शाब्दतरङ्गिणी - Dvaita Vedanta Studies and Research Foundation, Bengaluru- 2006

(2) श्रीजयन्तभट्टकृता न्यायमञ्जरी - Oriental Research Institute, Mysore - 1983

प्रतिपादनावसरे एवमुक्तम् – "यद्येवं सङ्कटे पतिता स्मः। न विद्मः किं विद-ध्महे। क्रिया हि फलार्था, फलं च पुरुषश्च इति परिवर्तमाने चक्रे कस्य प्राधा-न्यं शिष्मः? कस्य वाक्यार्थत्वम्?" इति प्रश्नं कृत्वा समाहितम् "उच्यते - पु-रुषस्तावत् न वाक्यार्थः। आख्यातवाच्यत्वे एव तस्य विवदन्ते । (अर्थात् भावना कृतिर्वा आख्यातार्थः इति किल मन्यन्ते) का कथा वाक्यार्थत्वस्य? ननु कर्तरि लकारः इति स्मरणात् कथं न आख्यातवाच्यः कर्ता? कोऽयं लकारो नाम? स हि (एभिः सर्वैः मिलत्वैव लकारस्वरूपं ज्ञातव्यम्) वर्तमाने लट् इति विधाय, 'कर्तरि शप्' 'युष्मदि मध्यमः' 'अस्मद्युत्तमः' 'शेषे प्रथमः' 'तिप्तस्झि...' इति 'बहुषु बहुवचनम्' 'द्व्येकयोः द्विवचनैकवचने' इति वा-क्यान्तरैः विभज्य विवृतः। तदेतानि कारकसङ्ख्याविभक्तिविधायीनि सूत्राणि एकवाक्यतया व्याख्येयानि, एकार्थविषयत्वात्। एको हि 'पचति' इत्यादि-शब्दः तैः व्याक्रियते। तदेवं एषः वाक्यार्थो भवति – कर्तुः बहुत्वे बहुवचनं झि इति । सेयं कर्तृसङ्ख्या आख्यातवाच्या भवति, न कर्ता, इति कुतस्तस्य वा-क्यार्थत्वम्? अलं चानया शास्त्रान्तरगर्भया द्राघीयस्या कथया । पुरुषस्ताव-त् न वाक्यार्थः" –इति निरूपितम् (पु.८१) । अत्र न्यायमञ्जर्यां वैय्याकर-णमतसूत्राण्यादाय आख्यातवाच्या न कर्ता अपि तु कर्तृसङ्ख्या इति प्रतिपादिता।

अत्रैव ग्रन्थे भावनायाः वाक्यार्थत्वपक्षे पचतीतिस्थले एवमुक्तम् – अपि च पचतीति आख्यातपदस्य यदा अर्थो व्याचिख्यासो भवति, तदा 'पाकं करोति' इति वाक्यं व्याख्यातारः प्रयुञ्जते – पचतीति कोऽर्थः? इति पाकश-ब्देन द्वितीयान्तेन साध्यं धात्वर्थं व्याचक्षते। कर्तृव्यापारात्मकं प्रत्ययार्थं करोतीति पदेन, किञ्च किं करोति देवदत्तः? इति पृष्टास्सन्तः द्वये वक्तारो भवन्ति 'करोति पाकम्' इति, 'पचति' इतिवत्। तदिदमुभयरूपमप्युत्तरम्

एकार्थम् । अन्यथा न तेन प्रष्टा प्रत्याय्येत । तस्मात् "पाकं करोति" इति पद-द्वयस्य योऽर्थः स एवार्थः एकस्य पचतीति पदस्य । अत्रापि पचत्यर्थादन्यः करोत्यर्थः प्रतीयते एव । योऽसावन्यः करोत्यर्थः सा भावना – इति ।

**कृष्णावधूतविरचिततर्कनवनीते** – 'व्याकरणात् लः कर्मणि च ... इति कर्त्राख्यातस्य कृतौ शक्तिरङ्गीक्रियते । रथो गच्छति इत्यादौ आख्यातस्य व्यापारे .... ।'

**दीधित्याम् – (रघुनाथभट्टाचार्यकृतायाम्)** – "आख्यातस्य यत्नो वाच्यः । पचति पाकं करोति इति यत्नार्थककरोतिना सर्वाख्यातविव-रणात्" ।

**शब्दशक्तिप्रकाशिकायाम्** – तिङ्रूपे प्रत्यये लक्षणमाह –

**धात्वर्थेन विशिष्टस्य विधेयत्वेन बोधने ।**
**समर्थस्वार्थयत्नस्य शब्दो वाख्यातमुच्यते ।**

इत्यस्य व्याख्यानवेलायाम् – 'धात्वर्थावच्छिन्नस्वार्थयत्नविधेयताकअन्वयबोधसमर्थः शब्दः वा आख्यातः । तदेव च तिङ् इति अर्थाल्लभ्यते । तिङाख्यातयोः पर्यायत्वात् इति भावः ।

आख्यातत्वं च रूढिसम्बन्धेन आख्यातपदवत्वम् । तिप्तस्त्वादिकमेव विशिष्य आख्यातपदशक्ततावच्छेदकं बोध्यम् । (त.प्र.ख. ४ पु.७३)

तिङ् शाब्दिकैराख्यातमुच्यते । (श.प्र. श्लो. ९५,१३७)

**व्युत्पत्तिवादे**[1] – लकारार्थप्रकरणे – तत्र लडादिदशलकाराणां 'लः

(1) व्युत्पत्तिवादः - लकारार्थविचारः - पण्डितराजेन वि. सुब्रह्मण्यशास्त्रिणा विरचितेन विवरणेन संवलितः - अण्णामलै विश्वविद्यालयः - १९४८

कर्मणि च भावेचाकर्मकेभ्यः' इति सूत्रेण कर्तृकर्मभावेष्वनुशिष्टानां कर्तृत्वसामान्यमर्थः ।

अत्राख्यातपदाभावेऽपि तदर्थबोधकं वाक्यमस्तीति उल्लिखितमिति बोध्यम् ।

## अलङ्कारग्रन्थेषु

**व्यक्तिविवेके**(1) – (राजानकमहिमभट्टविरचिते) तत्र पदम् अनेकप्रकारम् । नाम-आख्यात-उपसर्ग-निपात-कर्मप्रवचनीयभेदात् । भावप्रधानमाख्यातम् । असत्वभूतार्थाः उपसर्गादयः

**द्विधा कैश्चित् पदं भिन्नं चतुर्धा पञ्चधाऽपि वा ।**
**क्रियाप्रधानं गुणवत् एकार्थं वाक्यमिष्यते** ॥(पु.३,६) ।

**अत्र व्याख्याने** – नामपदानां पूर्वोक्तयुक्त्या सत्यपि क्रियाशब्दत्वे क्रियायाः अप्राधान्यम् । आख्यातपदानां पुनः शब्दशक्तिस्वाभाव्यात् क्रियाप्राधान्यम् । चतुर्धा नाम-आख्यात-उपसर्ग-निपातत्वेन ।

अग्रे **व्यक्तिविवेकटीकायां** गाहन्ताम् इति । अत्र कर्तुः आख्यातेन अभिधानम् । कर्मणश्च अभिधानम् (पु.३५)

**रसगङ्गाधरे**(2) –

---

(1) व्यक्तिविवेकः - श्रीराजानकमहिमभट्टप्रणीतः - गणपतिशास्त्रिना संशोधितः - राजकीयमुद्रणालये - १९०९

(2) Rasagangadhara of Jagannatha Pandit Edited by Mahamahopadhyaya Durga prasad and Vasudeva Lakshmana Sastri Panasikar; Published by Tukaram Javaji, Nirnaya sagar press, Bombay - 1916.

**अमितगुणोऽपि पदार्थः दोषेणैकेन निन्दितो भवति ।**
**निखिलरसायनराजः गन्धेनोग्रेण लशुन इव ॥**

**यथा वा उपकारमेव कुरुते विपद्गतः सद्गुणोनितराम् ।**
**मूर्च्छां गतो मृतो वा निदर्शनं पारदोऽत्र रसः ॥**

उदाहरणं नाम किमिति निरूपणावसरे श्लोकद्वयमुल्लिख्य एवमभिहितम् – "तत्र तावत् अमितगुणः इति पद्ये **क्रियाप्रधानमाख्यातमिति नये** अमितगुणपदार्थकर्तृकमेकदोषहेतुकं निन्दाविषयीभवनं निखिलरसायनराज-लशुनकर्तृकोग्रगन्धहेतुकनिन्दाविषयीभवनावयवकम् इति धीः । **प्रथमान्त-मुख्यविशेष्यकबोधवादिनां तु** उग्रगन्धहेतुकनिन्दाविषयीभवनाश्रयतादृश-लशुनावयवकः तादृशपदार्थः एकदोषहेतुकनिन्दाविषयीभवनाश्रयः ।"

एवमत्र न्यायमतरीत्या, व्याकरणमतरीत्या शाब्दबोधवर्णनं दृश्यते ।

## द्वैतग्रन्थेषु

**न्यायसुधायां**[1] –

सन्ध्याधिकरणे – (पु. ४५३३) येषां च अखण्ड एव कालः । तैरपि उपाधिभेदः अङ्गीकर्तव्य एव । अन्यथा **सर्वाख्यातप्रत्ययानाम्** ऐकार्थ्य-प्रसङ्गात् ।' इति वदता तिङ्प्रत्ययस्यैव आख्यातपदवाच्यत्वं स्वीकृतम् ।

अत्र व्याख्याने **परिमळे** – 'सर्वाख्यातः' इत्यस्य विवरणम् – **भूतवर्तमानभविष्यदर्थकलकारादेश- रूपतिङ्प्रत्ययानाम्** इत्यर्थः ।

प्रकृत्यधिकरणीयसुधाव्याख्याने **यादुपत्ये** – "पूर्वायोगे परग्रहः" इत्यनुव्याख्यानविवरणावसरे सुधायामेक श्लोकः उदाहृतः –

---

(1) श्रीमन्न्यायसुधा - षट्टिप्पणीसमेता - प्रकाशिका - विश्वमध्वमहापरिषत् - १९८२

मुख्यार्थबाधे तद्योगे रूढितोऽथ प्रयोजनात् ।
अन्यार्थो लक्ष्यते यत् सा लक्षणारोपिताक्रिया ॥ इति ।

अत्र यादुपत्ये अस्य श्लोकस्यान्वयोऽर्थश्च निरूपितः। तथाहि –" मुख्यार्थयोगतद्बाधाभ्याम् अन्यार्थो लक्ष्यते प्रतिपाद्यते इति यत्सा लक्षणेत्यन्वयः। न तु लक्ष्यतेत्यस्य लक्षणया उच्यत इत्यर्थः। आत्माश्रयत्वप्रसङ्गात्। अत्र **यत्** इत्यनेन लक्ष्यते **इत्याख्याते** गुणीभूतं प्रतिपादनमात्रं परामृश्यते, यद्वा यत् यस्माद् व्यापाराद् अन्यार्थो लक्ष्यते सा लक्षणेत्यर्थः। सर्वनाम्नां विधेयलिङ्गत्वस्य व्युत्पत्तिसिद्धत्वात् सेत्युक्तम्" इति।

अस्मिन् सन्दर्भे **शेषवाक्यार्थचन्द्रिकायां** संवादोऽपि दर्शितः – "अत एव काव्यदर्पणे यदित्यनेन गुणीभूतं प्रतिपादनं परामृश्यते इत्युक्तमित्यवधेयम्" इति।

**ज्योतिरुपक्रमाधिकरणे** – 'इत्यशेषक्रियानामशब्दैरेको जनार्दनः' – अत्र सुधायां "क्रियाशब्दाः आख्यातपदानि, नामशब्दाः सुबन्तपदानि" । (पु.१८४२)

**जिज्ञासाधिकरणे** – '**आख्यातपदं** प्रधानमिति चेत् दध्ना जुहोति इत्यादि गुणविधानेषु अनुपपत्तेः । **आख्यतपद**रहितेष्वपि अन्वयप्रत्ययदर्शनाच्च । न हि परिणतिसुरसं पनसफलम् इत्यत्र अन्वयो न प्रतीयते इति वाच्यम् । (पु.९६३)

अत्र **वाक्यार्थचन्द्रिकायां** – 'आख्यातपदम् आख्यातोपेतक्रियापदम्।

सुधायां **जिज्ञासाधिकरणव्याख्याने सत्यव्रतीये** (पु.६८) – विद्याशास्त्रशब्दयोर्व्याख्यानव्याख्येयभावमनुपपत्तिमाशङ्क्य एकार्थत्वं समर्थितम् ।

तदवसरे 'विद्याशब्दस्य वेत्ति अनया शिष्यः तत्वमिति शिष्यकर्तृकवेदनकर-णत्वार्थकत्वेन, शास्ति तत्वम् अनेनेति शास्त्रशब्दस्य गुरुकर्तृकशासन--करणार्थकत्वेन तयोः भिन्नार्थकत्वात् इत्यत आह यद्यपीति। तथा च आख्यातार्थभूतधात्वर्थानुकूलव्यापारभेदेऽपि तस्याविवक्षया धात्वर्थभूतज्ञान-मात्रविवक्षया तत्करणत्वस्य उभयत्रानुगतत्वात् तदैकार्थ्यमिति भावः ।' – इति ।

**विष्णुतत्वनिर्णयटीकाव्याख्यायां –**

**व्यासतत्वज्ञतीर्थकृतायाम्** – "अत्र एक इति प्रातिपदिकबोध्यता-वच्छेदकमेव च्विप्रत्ययार्थः.... तस्य च आख्यातार्थे आश्रये अन्वयः।" – 'परेऽव्यये सर्व एकीभवन्ति' इति वाक्यविचारे (पु.७१५)

**विष्णुतत्वनिर्णये –**

**वर्तन्ते उपचारेण तिङ्पदान्यखिलान्यपि ।**
**तस्मात् सर्वगतो विष्णुः एको भिच्च ततो बहुः ॥ – इति नारायणश्रुतिः ।**

अत्र टीकायाम् – तिङ्पदानि = तिङन्तपदानि इत्यर्थः ।

**तर्कताण्डवे**[1] – (श्रीव्यासतीर्थकृते) आख्यातार्थस्त्वधःसन्तपनादिरूपधात्वर्थानुकूलव्यापार एव, न तु यत्नरूपा कृतिरेवेति नियमः।

**अभिनवताण्डवे**[2] – अक्षादिशब्दवत् आख्यातो नानार्थः ।

---

(1) Tarka Tandavam Of Sri Vyasatirtha- Govt. Oriental Library, Mysore - 1938

(2) श्रीसत्यनाथतीर्थश्रीचरणविरचितम् अभिनवताण्डवम् - प्रकाशकः सत्यध्यान रामाचार्य कट्टि- बेङ्गलूरु - १९८८

## योगग्रन्थेषु

अथ योगानुशासनम् इति सूत्रार्थविवरणसन्दर्भे – (लक्षणातद्भेदनिरूपणावसरे) –

**मुख्यार्थबाधे तद्योगे रूढितोऽथ प्रयोजनात् ।**
**अन्यार्थो लक्ष्यते यत्सा लक्षणारोपिता क्रिया ॥**

इति श्लोकव्याख्यानावसरे उक्तम् – "यच्छब्देन लक्ष्यते इत्याख्याते गुणीभूतं प्रतिपादनमात्रं परामृश्यते" इति ।

## कोशेषु

**शब्दकल्पद्रुमे च** – 'आख्यातं कथितम् उक्तम्' इत्यमरः । (प्रथितः प्रसिद्धः प्रकाशितः) इत्यनन्तरं व्याकरणोक्तधातूत्तरविहिततिङ्प्रत्ययादि ।

**वाचस्पत्ये** – आख्यातम् आख्यातेन क्रियासातत्ये इति पाणिनीयसूत्रे तिङन्तत्वम् आख्यातपदेन स्वीक्रियते । प्रत्ययग्रहणे तदन्तग्रहणमिति नियमात् । आख्यातपदमत्र तिङन्तमिति स्पष्टम् ।

**न्यायकोशे** – आख्यातत्वं च तिबाद्यन्यतमत्वम् । सङ्केतविशेषेण आख्यातपदवत्वं वा ।

स्वभिन्नप्रथमान्तस्य नाम्नोऽर्थे स्वार्थसङ्ख्याबोधं प्रति समर्थाः प्रत्ययाः तिङः उच्यन्ते ।

यः प्रत्ययः इतरान्वितस्वार्थावच्छिन्नविशेषकशाब्दबोधं प्रति स्वरूपायोग्यः सः तिङ् उच्यते ।

धात्वर्थावच्छिन्नस्वार्थयत्नविधेयताकान्वयबोधसमर्थः शब्दः तिङ् ।

## नाट्यशास्त्रग्रन्थेषु[1]

पूर्वाचार्यैरुक्तं शब्दानां लक्षणं समासयोगेन ।

विस्तरशः पुनरेव प्रकरणवशात् सम्प्रवक्ष्यामि ॥ २५ ॥

अर्थप्रधानं नाम स्यादाख्यातं तु क्रियाकृतम् ।

द्योतयन्त्युपसर्गास्तु विशेषं भावसंश्रयम् ॥ २६ ॥

नामाख्यातार्थविषयं विशेषं द्योतयन्ति ते ।

आख्यातं पाठ्यकृतं ज्ञेयं नानार्थाश्रयविशेषम् ।
वचनं नामसमेतं पुरुषविभक्तं तदाख्यातम् ॥ ३१ ॥

विभक्त्यन्तं पदं ज्ञेयं ...... ॥
– भरतमुनिप्रणीतनाट्यशास्त्रे अ.१४

## बौद्धग्रन्थेषु

बौद्धानां पालिव्याकरणग्रन्थाः सन्ति येषु आख्यातपदोल्लेखः दृश्यते । यथा मोगल्लायनविरचितं व्याकरणम् – अकारविधि-नाम-समास-तद्धित--आख्यात इत्यादिरीत्या विभक्तोऽयं ग्रन्थः। एवम् अष्टविभागेन विभक्ते कच्चायनप्रणीते व्याकरणे[2] आख्यातपदोल्लेखः दृश्यते । अपि च बुद्धप्पिया-

(1) NATYASHASTRA - of Bharatamuni, Banares Hindu University, Varanasi, 1971

(2) Kacchayana vyakarana - Pali grammer - Tara book agency - 1989; 2) http://shodhganga.inflibnet.ac.in/bitstream/10603/13938/7/07_chapter%201.pdf

रचितरूपसिद्धिग्रन्थे विशिष्यआख्यातविचारः विभक्तिविधानरूपेण विकरण-विधानरूपेण धातुप्रत्यय- कालादिनिरूपणेन च दृश्यते । अत्र ग्रन्थेषु आख्यातपदं तिङ्प्रत्ययपरं तिङन्तपरं च विवृतम् इति बोध्यम् ।

## अन्यग्रन्थेषु

"आख्यातं यत्क्रियावाचि नाम सत्वाख्यमुच्यते" इति। अत्र धातोः प्रकृत्यंशस्य आख्यातत्वं प्रतिपादितम् ।

"**अविशिष्टलिङ्गमाख्यातक्रियावाचि,** तत्र नाम सत्वाभिधायि"। इदं च धातोराख्यातत्वे ।

The Philosophy of Akhyata and its nature - इत्याख्ये ग्रन्थे – 'कातन्त्रव्याकरणे एवमुक्तम् । **आख्यायन्ते** कथ्यन्ते अर्थतः निष्पाद्यन्ते भ्वादीनां रूपाणि येन तत् आख्यातम्' इति ।

अथवा '**आख्यान्ति** आचक्षते कर्तव्यपरमिति आख्यातः ।'

'आ सम्यक् = प्राधान्येन, निराकाङ्क्षत्वेन, असाध्यत्वेन वा ख्याताः प्रतिपादिताः = पचनादिरूपाः क्रियाः, येन इति **आख्यातं** पचत्यादि-रूपम् ।'

**प्रयोगरत्नमालायाम्** – 'विभक्तिः तद्धितआख्यातकृताश्च[(1)] प्रत्ययः' इति । (१.१७२)

**सर्वलक्षणसङ्ग्रहग्रन्थे** – आख्यातत्वं च सुप्भिन्नत्वे सति सङ्ख्याबोधकप्रत्ययत्वम् इति तिङ्प्रत्ययपरतया व्याख्यातम् ।

---

(1) कृतश्च इति पाठेन भाव्यमिति भाति ।

**पदवाक्यरत्नाकरे -**

**भावप्रधानमाख्यातम् इति निर्वचनस्मृतेः ।**
**आख्यातार्थे तु भावस्य प्राधान्यमनुशिष्यते ॥**

## अद्वैतग्रन्थेषु

(1)**भामत्यां** "तत्तु समन्वयात्" इति सूत्रव्याख्यानावसरे एवमुक्तम् – "एतदुक्तं भवति । नित्यशुद्धत्वमात्मनोसिद्धम्, संसारावस्थायामविद्यामलिनत्वादिति शङ्कां निराकरोति । न । कुतः? क्रियाश्रयत्वानुपपत्तेः । न अविद्या ब्रह्माश्रया, किन्तु जीवे, सा तु अनिर्वचनीया इत्युक्तम्, तेन नित्यशुद्धमेव ब्रह्म । अभ्युपेत्य तु अशुद्धिं क्रियासंस्कार्यत्वं दूष्यते । क्रिया हि ब्रह्मसमवेता वा ब्रह्म संस्कुर्यात्, यथा निधर्षणम् इष्टकाचूर्णसंयोगविभागप्रचयो निरन्तरः आदर्शतलसमवेतः । अन्यसमवेता वा ।

अत्र **वेदान्तकल्पतरौ** – "निधर्षणव्याख्यानम् – इष्टकेति ॥ एतच्च 'धात्वर्थः संयोगविभागावेव' इति मतमाश्रित्य" इति ।

अत्रैव **कल्पतरुपरिमळे** –"ननु धर्षणस्य आदर्शगतइष्टकाचूर्णसंयोगविभागप्रचयतया व्याख्यानमयुक्तम्, फलं हि तत्प्रचयः पुरुषव्यापाररूपाया धर्षणक्रियायाः, यथा तण्डुलविक्लित्तिः पचिक्रियाया इत्याशङ्क्याह – एतच्चेति ॥ सर्वत्र फलमेव धात्वर्थः, न तु तदनुकूलव्यापारः, त्यजिगमिधात्वोः पर्यायतापत्तेः । एक एव हि पूर्वदेशविभागोत्तरदेशसंयोगरूपफलद्वयस्यापि अनुकूलो व्यापारः पुरुषस्पन्दः । यदि उच्येत फलविशेषावच्छिन्नरूपो धात्व-

---

(1) ब्रह्मसूत्रशाङ्करभाष्यम् - परिमळकल्पतरुभामतीसहिता अनन्तकृष्णशास्त्रिभिः टिप्पणेनोपस्कृतम् – निर्णयसागरप्रेस् (१९३८) पु. १०३

र्थः, ततः पूर्वदेशं त्यजति, उत्तरदेशं गच्छतीत्यर्थभेदस्तयोरिति, तर्हि आवश्यकत्वाल्लाघवाच्च, तत्तत्फलमेव धात्वर्थोस्तु। न चैवं सति पचेः विक्लित्त्यर्थतायां विक्लित्त्युदयात् प्राक् पचतीति वर्तमानप्रयोगो न स्यात्, न स्याच्च, तण्डुलान् पचतीति तण्डुलानां कर्मतया निर्देशः, धात्वर्थरूपविक्लित्तिक्रियाजन्यस्य तण्डुलेषु फलान्तरस्यासम्भवात् परसमवेतत्वाभावाच्चेति वाच्यम्। **धात्वर्थरूपफलानुकूलव्यापारस्य आख्यातार्थत्वाङ्गीकारेण** पचतीति लडर्थस्य वर्तमानत्वस्य एकप्रत्ययोपात्ते तस्मिन्नन्वयोपपत्तेः। तज्जन्यविक्लित्तिरूपफलभागित्वेन तण्डुलानां कर्मतया निर्देशोपपत्तेश्च इति **मण्डनाचार्याणामतमनुसृत्य(1)** संयोगविभागरूपस्य फलस्य दर्शीति धात्वर्थत्वमुक्तमिति भावः " - इति। अत्राग्रे मण्डनाचार्यमतोपरि आख्यातार्थस्य नानार्थत्वादिदोषं कथयताम् अन्येषां मते कथमिहोपपत्तिः' इत्याशङ्क्य समाहितं **वेदान्तकल्पतरौ** – "संयोगविभातिरिक्तधात्वर्थपक्षेपि समानं धात्वर्थस्य संयोगविभागद्वारातिशयजनकत्वात्। न च आत्मनि क्रियाजन्यातिशयसम्भव इति" इति।

**वेदान्तकल्पतरौ** – तदाहुः

**सर्वत्राख्यातसम्बद्धे श्रूयमाणे पदान्तरे ।**
**विधिशक्त्युपसङ्क्रान्तेः स्याद्धातोरनुवादता ॥**

**कल्पतरुपरिमळे** – "यजेत" इत्यत्र हि **आख्यातसा**मान्यार्थकृत्याक्षिप्तः तदाश्रयः कर्ता प्रतीयते एव यत्र एकवचनाद्यर्थसङ्ख्यान्वयः तस्मात् कर्तव्यत्वं लिङाद्यर्थः इति नाभ्युपेयम् इति चेत्, सत्यम् । ..... तथापि कर्तव्यत्वइष्टसाधनत्वयोः धर्मी यागादिः तदर्थः नाभ्युपेयः । धातुसमभिव्याहारादेव तयोः ताद्धर्म्यसिद्धेः स्पष्टत्वात् इत्यत्र तात्पर्यम् ।

---

(1) मण्डनाचार्यमतविश्लेषणमग्रे तर्कताण्डवे वर्तते। तत्र द्रष्टव्यम्।

* अयं हि नियमः – शरीरवाचकानां शरीरिविशेषणत्वे, न तु विशेष्यत्वेऽपि; शरीरं नष्टम् इति वाक्येऽपि शरीरिणो ग्रहणापत्तेरित्युभयवादिसम्मतम् । तत्त्वमसि इत्यत्र च शरीरवाचकं त्वंपदं न विशेषणम् । **आख्यातसामानाधिकरण्यासम्भवेन** असीति मध्यमपुरुष एकवचनासाधुत्वप्रसङ्गात् । ...... एवञ्च जीवब्रह्माभेदपरत्वमेव उक्तवाक्यस्याङ्गीकरणीयम् । शुद्धचैतन्यपरत्वेऽपि त्वम्पदस्य मध्यमपुरुषप्रयोगोपपत्तिस्तु वाच्यार्थान्वयमादायोपपादनीया इति सर्वमनवद्यम् । **(अनन्तकृष्णशास्त्रिभिः)**

**शाङ्करभाष्ये**[1] – तद्विषये लिङादयः श्रूयमाणा अपि अनियोज्यविषयत्वात् कुण्ठीभवन्ति उपलादिषु प्रयुक्तक्षुरतैक्ष्ण्यादिवत् ।

यद्यपि अत्र भाष्ये नाख्यातपदमुल्लिखितम्, परमाख्यातपदप्रयोगः लकारेषु क्रियत इति धिया एतद्वाक्यमत्रोल्लिखितमिति बोध्यम् ।

## विशिष्टाद्वैतग्रन्थेषु

**जिज्ञासादर्पणे** – “प्रतिपत्तिप्रकारस्तु यजेतेत्यादौ स्वव्यापारसाध्यः यागादिविशिष्टः इति कर्तृप्राधान्येनैव । अनेन **आख्याता**समभिव्याहारे धात्वर्थविशेष्यक एव बोधः इत्यपि दर्शितम्” इति ।

**श्रीभाष्ये रामानुजाचार्यविरचिते जिज्ञासाधिकरणान्ते** – "अतः विधिवाक्येष्वपि धात्वर्थस्य कर्तृव्यापारसाध्यतामात्रं शब्दानुशासनसिद्धमेव लिङ्गादेर्वाच्यमित्यध्यवसीयते"

---

(1) The Works of Sri Shankaracharya - Vol 1 Sri vanivilas Press Srirangam; 1910

**वेदार्थसङ्ग्रहे** – 'स्वर्गकामो यजेत' इत्येवमादिषु लकारवाच्यकर्तृविशेषसमर्पकाणां स्वर्गकामादिपदानां नियोज्यविशेष्यसमर्पकत्वं शब्दानुशासनविरुद्धम् - इति ।

**वेदान्तदीपे कर्त्रधिकरणे** – 'यजेत उपासीत' इति कर्तरि लकारः । अतः कर्तारमेव बोधयति शास्त्रम् ।

**न्यायपरिशुद्धौ** – लिङादेः कोऽयमर्थः परिगृहीतः? ....... कर्तृव्यापारसाध्यतां व्युत्पत्तिसिद्धां लिङादयः अभिदधतीति .... कर्तृवाचिनां प्रत्ययानाम् .... ।

**नप्रयोजनाधिकरणे सुधाग्रन्थे(1)** - यद्वा प्रयत्नःकर्तृत्वं तस्यैव आख्यातार्थतया निर्णीतत्वात् ।

## मीमांसाग्रन्थेषु

**शाबरभाष्ये** – 'भावार्थाः कर्मशब्दाः ..... येषां तु उत्पत्तौ अर्थे स्वे प्रयोगः न विद्यते तदाख्यातानि ....' (२-१ ११, १-२२, ३,४,१३...)

**अर्थसङ्ग्रहे – लौगाक्षिभास्करकृते** – आख्याततत्वं दशलकारसाधारणम् ।

तट्टीकायां **किरणावल्याम्** – लट्-लिट्-लुट्-लृट्-लेट्-लोट्-लिङ्--लङ्-लुङ्-लृङ्साधारणांशः आख्याततत्वम् । लिङ्त्वं लिङ्मात्रे । आख्याततत्वलिङ्त्वाभ्यामुभाभ्यां तु भावनाभिप्रायः व्यापारविशेषः ।

आख्यातसञ्ज्ञा लिङ्सञ्ज्ञा च अनादिनी नित्यत्वात् । व्याकरणेन तु सा अनुवादिता ।

---

(1) द्वैतवेदान्तग्रन्थः

श्लोकवार्तिके (कुमारिलभट्टविरचिते) – न हि प्रयोजनोपेतं वाक्यमुच्चार्यते । क्वचित् प्रयोजनाक्षमं नापि पदमाख्यातवर्जितम् ।

भावनैव वाक्यार्थः सर्वत्र आख्यातवतः ।

* * * * *

## आख्यातपदव्युत्पत्तिः

(*) आख्यायते अनेन इति आख्यातम् ।

(*) आख्यायन्ते कथ्यन्ते अर्थतः निष्पाद्यन्ते भ्वादीनां रूपाणि येन तत् आख्यातम् ।

(*) आख्यान्ति आचक्षते कर्तव्यपरमिति आख्यातः ।

(*) आ सम्यक् प्राधान्येन ख्याताः प्रतिपादिताः पचनादिरूपाः येन तत् आख्यातम् ।

(*) आ सम्यक् निराकाङ्क्षत्वेन ख्याताः प्रतिपादिताः पचनादिरूपाः क्रियाः येन तत् आख्यातम् ।

(*) आ सम्यक् साध्यत्वेन वा ख्याताः प्रतिपादिताः पचनादिरूपाः क्रियाः येन तत् आख्यातम् ।

* * * * *

# आख्यातपरिष्कारः

(*) रूढिसम्बन्धेन आख्यातपदवत्वम् ।

(*) तिबाद्यन्यतमत्वम्

(*) सङ्केतविशेषेण आख्यातपदवत्वम् ।

(*) स्वभिन्नप्रथमान्तनामार्थे स्वार्थसङ्ख्याबोधं प्रति समर्थभूतप्रत्ययत्वम्

(*) इतरान्वितस्वार्थावच्छिन्नविशेष्यकशाब्दबोधं प्रति स्वरूपायोग्यभूतं प्रत्ययत्वम् ।

(*) धात्वर्थावच्छिन्नस्वार्थयत्नविधेयताकअन्वयबोधसमर्थशब्दत्वम् ।

(*) लट्-लिट्-लुट्-लृट्-लेट्-लोट्-लिङ्-लङ्-लुङ्-लृङ्साधारणांशत्वम् आख्याततत्वम् ।

(*) सुप् भिन्नत्वे सति सङ्ख्याबोधकप्रत्ययत्वम् ।

(*) व्याकरणोक्तधातूत्तरविहिततिङ्प्रत्ययादित्वम् ।

(*) दशलकारसाधारणलत्वम् आख्याततत्वम् ।

(*) यत्नत्वावच्छिन्नविषयकशाब्दबुद्धित्वावच्छिन्नं प्रति यत्नत्वावच्छिन्नरूढिसम्बन्धघटितपदवत्वम् ।

(*) धात्वर्थनिष्ठप्रकारतानिरूपितभावनानिष्ठविशेष्यताशालिबोधजनकत्वम् ।

(*) भावप्रधानकबोधस्वरूपयोग्यत्वरूपबोधजनकतावच्छेदकीभूतानुपूर्वीमत्वरूपम् ।

(*) क्रियाकारकसमुदायबोधकत्वम्

(*) कारकसङ्ख्याविशिष्टक्रियाकालयोगाभिधायित्वम्

(*) कालरूपाभिधानविशिष्टधात्वर्थबोधकत्वम्

(*) शक्तिलक्षणान्यतरसम्बन्धेन आख्यातपदप्रतिपाद्यत्वं

* * * *

## आख्यातार्थः

**मणिकारमते** – कृतिः ।

**प्राभाकरमते** – सङ्ख्यामात्रम् ।

**रत्नकोशकारमते** – उत्पत्तिः उत्पादना वा ।

**उदयनमते** – प्रयत्नः ।

**भाट्टमते** – धात्वर्थानुकूलः व्यापारः (भावना) ।

**शिरोमणिमते** – यत्नः ।

**विशिष्टाद्वैतमते** – कर्ता, आश्रयः इत्यादयः ।

**आलङ्कारिकमते** – कर्ता, कृतिः इत्यादयः ।

**मण्डनमिश्रमते** – फलम् ।

**वैय्याकरणमते** – कर्ता, कर्तृत्वशक्तिमान्, आश्रयः ।

**द्वैतमते** – धात्वर्थानुकूलव्यापार एव नतु यत्नैव इति नियमः । अक्षादि-शब्दवत् नानार्थकत्वमाख्यातस्य । कर्तृकर्मणी अपि लकारवाच्ये ।

# आख्यातपदं किं धातुपरम्? उत तिङ्-परम् आहोस्वित् तिङ्धातूभयपरम्?

**न्यायमते** – "विभक्तिः द्वयी नामिकी आख्यातकी च ब्रह्मणाः, पचतीति उदाहरणम्" इति वात्स्यायनवचनबलात् प्रत्ययपरत्वमाख्यातस्य । एवं न्यायवार्तिककारेण "स्वाद्यन्तं नाम तिबाद्यन्तम् आख्यातम्" इति कथनात् तिङन्तपरत्वमपि आख्यातस्य । एवं न्यायग्रन्थावलोकनेन तिङन्ते तिङ्प्रत्यये च आख्यातपदव्यवहारः इति गम्यते ।

**मीमांसकमते** – लिङ्प्रत्यये अस्त्यसाधारणधर्मद्वयम् आख्यातत्वं लिङ्गत्वं च इत्यादिकथनेन तिङ्प्रत्यये आख्यातपदव्यवहारः ।

**वैय्याकरणमते**– आख्यातपदं धातौ तिङ्प्रत्यये तिङन्ते च प्रयुज्यत इतिसर्वमप्यङ्गीकृतम् इति भाति। तथाहि –

"प्रशंसायाम्" इति सूत्रभाष्ये 'आख्यातेन एका क्रिया अभिधीयते'ति वचनबलात् क्रियावाचकत्वं धातोर्लक्षणमिति आख्यातो नाम धातुः। परं "मयूरव्यंसकादयश्च" इति सूत्रे "अश्नीतपिबत इत्येवं सततं या अभिधीयते" इत्यादितिङन्तोदाहरणेन आख्यातपदं तत्परमित्यपि । इदं च "आख्यातम् आख्यातेन क्रियासातत्ये" इति पाणिनिसूत्रमूलकम् ।

एवं 'चत्वारि शृङ्गा त्रयो अस्य पादाः' इत्यत्र पस्पशाह्निके भाष्ये 'चत्वारि पदजातानि' इति विलिख्य 'नाम-आख्यात-उपसर्ग-निपाताश्च' इत्यत्र आख्यातं तिङन्तम् इति विवृतम् । अत्र 'पदजातानी'ति पदशब्दस्वारस्यानुरोधेन सुबन्त-तिङन्तान्यतरस्यैव वैय्याकरणैः पदत्वेन स्वीकारात् आख्यातपदं तिङन्तपरमिति स्पष्टम् । अथ च 'आख्यातजानि नामानि' इति शाकटायनवचनबलात् आख्यातो नाम धातुः इति । एवं शब्दरत्ने 'आख्यातक्रिया

आख्याते क्रिया' इति विवरणबलेन प्रथमपक्षे धातोर्ग्रहणम् । द्वितीयपक्षे तिङन्तग्रहणम् । अपि च निरुक्तबलात् आख्यातपदं धातुपरमेव । यतः सत्वप्रधानानि नामानीति वाक्यान्तरस्थितनामपदेन प्रकृतेः ग्रहणात् तत्सहचरितन्यायेन आख्यातपदेन भावप्रधानमाख्यातमित्यत्र धातोर्ग्रहणस्यैव उचितत्वात् ।

अपि च प्रातिशाख्ये 'तदाख्यातं येन भावः सधातुः' इति विवरणावसरे तद्भाष्ये 'सधातुरिति तृतीयार्थे प्रथमा' इति विवरणेन सधातुना भावाभिधानात् तिङन्तपरत्वमाख्यातस्य । अथ च वैय्याकरणभूषणसारे 'नन्वनयो(कर्तृकर्मणोः)राख्यातार्थत्वे किं मानम्?' । एवम् 'आख्यातशून्ये देवदत्तः पक्ता इत्यादौ' इत्यादिग्रन्थपर्यालोचनेन आख्यातप्रत्ययः तिङ्परः इति स्पष्टम् । एवमेव 'आख्यातशब्दे भागाभ्याम्' इति कारिकायाम् आख्यातशब्देत्यस्य "पश्य मृगो धावति" इत्यादौ इति विवरणदानात् तिङन्तपरमाख्यातमिति भासते ।

परमत्र विवदन्ते । इदं च 'आख्यातपदं तिङ्बोधकम्' इति नैय्यायिकवासनाभिप्रायेण । यतः वैय्याकरणनिकाये धातुतिङन्तान्यतरबोधकस्यैव स्वीकारादिति केचन वदन्ति ।

एवमेकत्र **निर्णयः** प्रदत्तः –

**Conclusion** - Now taking into consideration the various definitions and examples as given by the Nirukta the sages **Goutama** and **Jaimini** and the bhashyakaras like **Vatsayana, Sabara** and **Patanjali** prudent to accept that the word Akhayata cannotes a Tiganta in general rather strictly speaking a word ending in a suffix

capable of giving word-hood and producing a definite expectancy. It is not a mere root as argued by **Kaundabhatta** or a mere suffix as argued by the latter **logicians** and the **Mimamasakas.** Thus **Akhyata is fully inflected verb word like Pacati, Vrajati etc[1].**

परमत्र एवं निर्णये विचारः कर्तव्यः इति भाति । व्याकरणादिशास्त्रं च निरुक्तानुशासनमूलकम् । निरुक्तं च वेदमूलम् । अतः वेदानुरोधि अथवा तन्मूलपुराणानुरोधि भवेत् । परमेवं वेदे पुराणे च दृश्यते ।

तथाहि – **गोपथब्राह्मणे** इदमस्ति वाक्यम् - "ओङ्कारं पृच्छामः? को धातुः? किं प्रातिपदिकम्? किं नाम आख्यातम्? ....." इति । अत्र धात्व-पेक्षया प्रातिपदिकापेक्षया च आख्यातस्य प्रत्येकं परिगणना कृता । अनेन च धातुप्रातिपदिकरूपप्रकृत्यपेक्षया अन्यत्वेन आख्यातस्य ग्रहणात्प्रकृत्युत्तर-प्रत्ययपरत्वम् आख्यातस्य गम्यते ।

**एवमग्निपुराणवाक्ये** तु –

**स्कन्द उवाच**
**वक्ष्ये व्याकरणं सारं सिद्धशब्दशब्दस्वरूपकम् ।**
**कात्यायनविबोधाय बालानां बोधनाय च ॥१॥**

**तिङ्विभक्तिं प्रवक्ष्यामि तथादेशं समासतः ।**
**तिङस्त्रिष्वपि वर्तन्ते भावे कर्मणि कर्तरि ॥१॥**

---

(1) "The Philosophy of Akhyata and its Nature" (Part -1) - By Vedula Subrahmanyam; Andhra University, 26th January 1990 (TTD) (p.11)

**वर्तमाने लडाख्यातो विध्याद्यर्थे लिङीरितः** । इति लडादिषु आख्यातपदप्रयोगात् केवलं तिङन्तस्यैव इति निर्धारः कथमिति विचारणीयम्?

एवञ्च आख्यातपदस्य बहुत्र तिङ्प्रत्यये प्रयोगः दृष्टः । परं तिङन्ते धातौ च तत्तत् शास्त्रकारैः कृतःप्रयोगोपि दृष्टः इति बोध्यम् ।

**आलङ्कारिकमते** – व्यक्तिविवेकरसगङ्गाधरादिग्रन्थपर्यालोचने तिङ्प्रत्ययादिषु आख्यात- व्यवहारः गम्यते ।

**विशिष्टाद्वैतमते** – तिङ्प्रत्यये आख्यातपदव्यवहारः ।

**योगग्रन्थे च** – लक्ष्यते इति आख्याते इति कथनेन तिङ्प्रत्यये अथवा तिङन्ते आख्यातशब्दः व्यवहृतः ।

**द्वैतग्रन्थे** – सुधायाम् "अन्यथा सर्वाख्यातप्रत्ययानाम् ऐकार्थ्यप्रसङ्गात्" इत्यादिकथनेन तिङ्प्रत्यये आख्यातपदव्यवहारः ।

**नाट्यशास्त्रग्रन्थे** – 'अर्थप्रधानं नाम स्यात् आख्यातं तु क्रियाकृतम्' इति वचनबलात् 'सत्वप्रधानानि नामानि' 'क्रियाप्रधानमाख्यातम्' इति निरुक्तभाष्यवचनमादृतमिति गम्यते ।

* * * * *

# भावप्रधानमाख्यातम् इत्यस्य कोऽर्थः?

**न्यायमते** – आख्यातार्थाः भवन्ति बहवः कालसङ्ख्याभावनारूपाः। तेषु अर्थेषु कस्य मुख्यविशेष्यत्वम् इति आकाङ्क्षायां "भावनायाः एव सर्वतः प्राधान्यम्" इत्यर्थं बोधयितुं भावप्रधानमाख्यातार्थमिति नियमः ।

**वैय्याकरणमते** – भावप्रधानमाख्यातमित्यत्र भावः = क्रिया; प्रधानं यस्मिन् तत् भावप्रधानम् आख्यातम्। भावोऽत्र क्रिया । सा च करणव्युत्पत्त्या व्यापारं बोधयति, कर्मव्युत्पत्त्या च फलं बोधयति । एवञ्च आख्याते फलव्यापारयोः प्राधान्यम् इति फलति। अनेन व्यापारमुख्यविशेष्यकबोधो भवति वैय्याकरणानां मते इति ज्ञायते। यद्यपि तन्निरुक्तिबलात् तिङन्तमेव व्यापारफलप्रधानकमिति लभ्यते, न तु तिङन्तघटितवाक्यम्। तथापि "भावप्रधानमाख्यातम्, सत्वप्रधानानि नामानि" इति तिङन्तस्य भावप्रधानकत्वं, नाम्नः अर्थात् सुबन्तस्य धर्मिप्रदानकत्वमिति प्रतिपाद्य "यत्रोभे तत्र भावप्रधाने भवतः" इति अग्रिमनिरुक्तवचनात् वैय्याकरणैरेवं सिद्धान्तितम्। अस्य विवरणम् – यत्र उभे, नाम यत्र तिङन्तं सुवन्तमुभयं च वर्तते तत्र भावप्रधाने भवतः इति यथा 'चैत्रः तण्डुलं पचति' इत्यादिवाक्येषु । एवमग्रिमनिरुक्तग्रन्थानुसारेण भावप्रधानमाख्यातमित्यस्य धात्वर्थमुख्यविशेष्यकबोधे प्रमाणपरतया व्याख्यायते वैय्याकरणैः।

**मीमांसकमते** – भावो नाम भावना । सा च भवितुः भवनानुकूलः भावयितुः व्यापारविशेषः । अत्र भूधातुः णिजन्तः अच्प्रत्ययान्तश्च । तथा च भावयतीति भावना इति विवरणम् । ततश्च आख्यातार्थेषु भावनाकालसङ्ख्यादिषु भावनाया एव प्राधान्यम् । अन्येषाम् एतदपेक्षया गुणत्वम् इति बोधयितुमेव भावप्रधानमाख्यातमिति निरुक्तस्मृतिः आरब्धा ।

**आलङ्कारिकमते** – भावप्रधानमाख्यातमित्यस्य भावः व्यापारः तदर्थकमाख्यातं तिङ् अथवा भावप्रधानमाख्यातमित्यस्य भावनार्थको धातुः ।

## नैयायिकमतप्रमेयसङ्ग्रहः

नैयायिकास्तावत् प्रायः प्रथमान्तार्थमुख्यविशेष्यकशाब्दबोधमङ्गी-कुर्वन्ति । तेषां मते आख्यातपदं न प्राधान्यमावहति । अत्र विचारयन्तः नैयायिकाः अमुं वादं प्रस्तुवन्ति । किमस्ति आख्यातपदस्य वाक्ये अपेक्षा? उत नास्ति? इति विकल्प्य नास्तित्वकोटिमवलम्ब्य एवं वाक्यार्थं मण्डयन्ति

'चैत्रो मूर्खः' इति वाक्यात् बोधः भवति – चैत्राभिन्नो मूर्खः इति । अयञ्च अनुभवसिद्धः । न चात्र आख्यातपदं दृश्यते । अतः तदर्थः मुख्यवि-शेष्यतया न भासते इति तु वक्तुं शक्यते ।

एवमेव नैके प्रयोगाः उपलभ्यन्ते च । तथाहि –

**शशी दिवसधूसरः विगतयौवना कामिनी ।**
**सरो विगतवारिजं मुखमनक्षरं स्वाकृतेः ॥**

**प्रभुर्धनपरायणः सतत दुर्गतः सज्जनः ।**
**नृपाङ्गणगतः खलः मनसि सप्तशल्यानिमे ॥**

इत्यस्मिन् पद्ये विनैव तिङन्तपदं शाब्दबोधात्मकः अनुभवः जायते । अत्र वक्त्रा स्वस्य शल्यवत् प्रतिभासमानाः पदार्थाः निरूपिताः । ते च सप्त । यथा धनपरायणः प्रभुः शल्यतुल्यम् विगतवारिजं सरः इत्यादिरीत्या । एताव-न्मात्रप्रयोगेणैव (अर्थात् क्रियापदं विनापि) विवक्षितः बोधः सिद्धः । अतः नैतेषु वाक्येष्वपि आख्यातार्थः धात्वर्थो वा मुख्यविशेष्यतया न भासते ।

अत्र शब्दशक्तिप्रकाशिकाकारवचनं स्मर्तव्यम् –

"यत्तु सुप्तिङन्तचयो वाक्यं क्रिया वा कारकान्विता - इति अमरसिंहैरुक्तम्, तन्न युक्तम् । सुबन्तादेः प्रत्येकसमुदायविकल्पेन अतिव्याप्त्यव्याप्त्योः प्रसङ्गात् । न हि घटम्, पटम्, इत्याकारः पचति गच्छतीत्यानुपूर्वीको वा शब्दसमूहो वाक्यम् । न वा "घटः पचति" इत्येतयोः प्रत्येकं न वाक्यम् । क्रियारहितं न वाक्यमस्तीत्यादिकस्तु प्राचां प्रवादः निर्युक्तिकत्वादश्रद्धेयः ।"

अस्याभिप्रायस्तु स्पष्टं कृष्णकान्तीटीकायां रामभद्रीटीकायां च निरूपितमिति नात्र विव्रियते ।

अतः अत्र सर्वत्र प्रथमान्तार्थस्यैव मुख्यार्थविशेष्यतया भानम् वक्तव्यमिति एकत्र प्रथमान्तार्थस्य मुख्यविशेष्यत्वस्य क्लृप्ततया सर्वत्र अस्यैव अङ्गीकरणमुचितमिति ।

अत्र **पूर्वपक्षिणः** –"अस्तिर्भवन्तीपरः प्रथमपुरुषः अप्रयुज्यमानोऽप्यस्ति" इति किल कात्यायन- वचनम् । एवमन्यच्च प्रसिद्धं वचः — "यत्नेन विना अस्ति भवत्योः सर्वत्र अध्याहारः" - इति ।

एतदनुरोधेन यत्र वाक्ये क्रियापदश्रवणाभावः तत्रावश्यम् 'अस्ती'त्यादिरूपाणि अध्याहर्तव्यानि इति 'मूर्खश्चैत्रः' इत्यादिपूर्वोदाहृतस्थलेष्वपि 'अस्ती'त्यादिक्रियाध्याहारेण आख्यातार्थस्यैव धात्वर्थस्यैव वा मुख्यविशेष्यतया भानम् इति ।

**सिद्धान्तिनः** – शब्दप्रयोगो हि परबोधनाय । परबोधनं च लघुशब्दैरेव सम्भवति सति अधिकपदकथनम् अनावश्यकम् । यतो हि लघुभिरेव शब्दैः बोधो वा तत्कार्यप्रवृत्तिर्वा जायत इति, तत्र न अधिकपदानि प्रयोगार्हाणि ।

एवमेव योग्यताऽपि अपेक्षिता । अर्थात् बोधोपयोगिनी योग्यता शब्दनिष्ठा भवेत् । एतद् रीत्या "त्वं मूर्खः, अहं मूर्खः" इति शब्दलाघवेनैव परेषां बोधः जात इति अस्माभिरनुभूयत इति किञ्चित् शब्दानुशासनमादाय एवम् अस्तीत्यादिपदाध्याहरणम् अनावश्यकमिति प्रथमान्तार्थमुख्यविशेष्यकबोध एव उदाहृतस्थलेषु सम्भवति ।

**पूर्वपक्षिणः** – सत्यम् । अथापि यत्किल प्रमितम् तदभ्युपगन्तव्यं सर्वैः । प्रमितश्च योग्यक्रियापदाध्याहारः । अत्र च अनुगतकार्यकारणभाव एव प्रमाणम् ।

अत्र कार्यकारणभावद्वयम् –(१) प्रातिपदिकार्थप्रकारकशाब्दबोधं प्रति विशेष्यतया सुप्- जन्योपस्थितिः कारणम् ।

(२) सुबर्थप्रकारकशाब्दबोधं प्रति क्रियापदजन्योपस्थितिः कारणम् –

एवं च "मूर्खश्चैत्रः" इत्यादिस्थलेषु सुबर्थप्रकारकशाब्दबोधस्य अपेक्षितत्वेन क्रियापदजन्योपस्थितेः तत्र कारणत्वात्, क्रियापदं तत्रापि आवश्यकमेव ।

**सिद्धान्तिनः** – यद्ययं कार्यकारणभावः अनुगतः, तर्हि स्यान्नाम पूर्वोक्तं सर्वम् । न च दृश्यते तथा । तथाहि –अस्मिन् कार्यकारणभावे सुप्त्वप्रातिपदिकत्वादीनां अनुगतत्वेन रूपेण निरूपणस्य अशक्यत्वात् । अतः अननुगतानां तेषां कार्यकारणभावे प्रवेशो नानुगतत्वं सिद्ध्यति । अतः नात्र कार्यकारणभावमवलम्ब्य "अस्ती"त्यादिक्रियापदाध्याहारः समर्थनयोग्यः ।

**पूर्वपक्षिणः** – ननु सुप्त्वं भवति जातिः, वा सुप्पदवाच्यत्वम्, वा पाणिनिसङ्केतसम्बन्धेन सुप्पदवत्वम् इति । एवं प्रातिपदिकत्वं च "अर्थवदधा-

तुरप्रत्ययः प्रातिपदिकम्” इति स्वीकृत्य । एवं च एतद्धटितकार्यकारणभावः अनुगत एव । अतः कथं न अनुगतः? इत्युच्यते ।

**सिद्धान्तिनः** – सुप्त्वस्त्य जातित्वं च न युज्यते । जातिबाधक-सत्वात् । अत्र च साङ्कर्यं जातिबाधकम् । परस्पर-असमानाधिकरणयोः धर्मयोरेकत्र समावेशरूपं तत् । अत्र अम्त्वं विहाय सुप्त्वं सुपि, सुप्त्वं विहाय अम्त्वं अमि, उभयोः समावेशः सुपि । एवं नापि सुप्पदवाच्यत्वं सुप्त्वम् । यतो हि सङ्केत एव ईश्वरीयः वाच्यत्वविषये प्रमाणम् । नात्र "सुप्पदात् सुप्त्वं बोद्धव्यम्" इति ईश्वरसङ्केते प्रमाणं वर्तते । नापि पाणिनिसङ्केतसम्बन्धेन सु-प्पदवत्वं सुप्त्वम् इति युज्यते विनिगमनाविरहात् । व्याकरणान्तरप्रणेतृसङ्केत-सम्बन्धेन तत्पदवत्वं वा पुरुषविशेषीयसङ्केतसम्बन्धेन पदान्तरवत्वं वा इति । एवं प्रातिपदिकत्वस्यापि अननुगतप्रत्ययत्वादिधर्मविशिष्टतया दुर्वचत्वमेव । एवं सत्यप्यङ्गीकारे प्रातिपदिकार्थाः विभक्त्यर्थाश्च अनन्ताः इति अनन्ताः का-र्यकारणभावः कल्पनीयाः । अतः अनुगतकार्यकारणभावे मानाभावात्, प्र-त्युत अङ्गीकारे गौरवात्, प्रकृते अनुभवानुसारेण प्रकृत्यर्थविशेष्यतया सुबर्थ-स्य भानाभावाच्च न क्रियापदाध्याहारो युक्तः ।

अपि च 'अस्तिर्भवन्तीपरः प्रथमपुरुषः अप्रयुज्यमानोऽप्यस्ति' इति वाक्यं भवदुक्तं प्रमाणं स्यात् । न चेदं प्रमाणम् । प्रमाणत्वेन अङ्गीकृतत्वेऽपि तस्य वचनस्य विधायकत्वमपेक्षितम् , न तु अनुवादकत्वम् । दृश्यते चास्य वचनस्य अनुवादकत्वम्, न तु विधायकत्वम् । तथा हि – “म्लेच्छानामन्तकः कल्की” “रावणस्य हन्ता रामः” इत्यादिषु स्थलेषु लडन्तअस्धातोः अध्या-हारो न युज्यते । अध्याहारात् प्रागेव अपेक्षिताकाङ्क्षाशान्तेरिति यावत् । एवं “गन्धवती पृथिवी, सा द्विविधा नित्या, अनित्या चेति” इत्यादिविभागवा-क्यवत् “त्रयः कालाः” इति विभागपरे वाक्ये ‘सन्ती’त्यादिक्रियाध्याहारस्तु

सुतरामयोग्य एव । यतः 'सन्ती'ति लडन्तप्रयोगे 'वतर्माने लट्' इत्याद्यनु-शासनबलात् वर्तमानकालिकी सत्ता क्रिया बोध्यते । सा च त्रिषु कालेषु बाधिता । त्रिषु कालेषु वर्तमानत्वबोधनासम्भवात् ।

**पूर्वपक्षिणः** – "अस्तिर्भवन्तीपरः ....." इति वचनम् विधायकमेव । न चोक्तदोषः । तथाहि – अस्तिपदं च अस्तिर्भवन्तीपरः.... इति वाक्यस्थं धातुमात्रोपलक्षकम् । अर्थात् भवतीत्यादि- तत्सजातीयधात्वन्तरं गृह्णाति । एवं 'भवन्ती'तिपदं च लकारमात्रोपलक्षकम् । उपलक्षकत्वाभावे च 'भव-न्तीति लटःसञ्ज्ञा प्राचाम्' इत्यनुरोधेन केवललट्लकारबोधः स्यात् । अतः उपलक्षकत्वे लत्वेन सकललकारग्रहणं भवति । यथा भू सत्तायामित्यादिस्थ-लेषु पाणिनिना यत् दिक्प्रदर्शनं कृतम्, यथोक्तम् – "क्रियावाचित्वमाख्यातु-म् एकैकोर्थः प्रदर्श्यते" इति । तथा अत्रापि कात्यायनवचने अनुसन्धेयम् । एवं च अस्-धातोः धातुत्वेन सजातीयं, भवन्त्याः लत्वेन सजातीयं च गृह्यते । एवं च पूर्वोक्तस्थलेषु "त्रयः कालाः" इत्यादिषु योग्यतया यः क्रिया-बोधकशब्दः अपेक्षितः स गृह्यते । अतः क्रियापदरहितं वाक्यं नास्त्येव ।

**सिद्धान्तिनः** – नास्य वाक्यस्य एवमर्थकत्वे विधायकत्वं युज्यते । "न विधौ परःशब्दार्थः" इति हि न्यायः । अर्थात् विधिवाक्ये वाच्यार्थभिन्नः अर्थः शब्दार्थतया न परिगण्यते । अत्र च विधिवाक्यत्वकथनात् अस्तिपदं भवन्ती-पदं च नोपलक्षकम् इति युज्यते एव दोषः । अतश्चास्य वाक्यस्य अनुवादकत्वं स्वीकर्तव्यम् । यस्य प्रयोगस्य करणे प्रयोक्तुर्विवक्षा, तद्बोधनं तत्र तत्र बोध्यते अनेन वाक्येन ।

अपि च भवन्तः वैय्याकरणा अपि अस्त्यादिपदरहितं वाक्यमभ्युपगच्छ-न्ति । यथा "नीलमिदं न रक्तम्" इतीतरनिवृत्तितात्पर्यकम् ।

वैय्याकरणभूषणसारे अस्त्यादिपदरहितमपि वाक्यमभ्युपगतम् । तथाहि – "प्रायशो वाक्यस्य सुब्-तिङन्तसमुदायत्वात् सुबन्तानां च प्रायः क्रियावि-शेषणत्वात् । धातोश्च क्रियावाचकत्वेन पुरस्फूर्तिकत्वात् इच्छावशाद् वा प्रथमतः धात्वर्थनिरूपणं बोध्यम् " इति ।

अत्र 'प्रायशः' इति पदस्वारस्येन क्रियापदरहितमपि वाक्यम् अभ्युपग-म्यते इति स्पष्टम् । अत्रैव ग्रन्थे प्रसङ्गान्तरे आख्यातार्थस्य व्यापाराश्रयत्वस्य कर्तृत्वस्वरूपनिरसनसन्दर्भे – "तस्मिन् प्रयोगे यः आख्यातार्थ इत्यस्य आव-श्यकत्वेन आख्यातशून्ये 'देवदत्तः पक्ता' इत्यादौ देवदत्तस्य अकर्तृत्वापत्तेः" इत्यत्र 'आख्यातशून्ये' इति पदबलात् क्रियापदरहितमपि वाक्यमस्तीति गम्यते ।

अपि च प्राचीनवैय्याकरणमतम् "तिङ्समानाधिकरणे प्रथमा" इति । अस्यायमर्थः – तिङ्सामानाधिकरण्ये एव प्रथमायाः साधुत्वमिति । एवञ्च पूर्वत्र 'नीलमिदं न रक्तम्' इत्यादौ इतरनिवृत्तितात्पर्यवति वाक्ये प्रथमायाः साधुत्वसम्पादनाय तिङ्सामानाधिकरण्यस्य आवश्यकत्वेन तिङन्तपदप्रयोगः आवश्यकः ।

तदत्र नव्यवैय्याकरणमते तु– "सुप्तिङन्तचयोवाक्यमि"ति वाक्यमादाय एवं विवृतम् – वाक्यत्वं च सुबन्तचयपर्याप्तत्वं, तिङन्तचयपर्याप्तत्वं, सुप्तिङ-न्तचयपर्याप्तत्वम् इति त्रेधा । अतः 'चैत्रेण शयितव्यम्' इति वाक्यम् इष्यते एतैः । अत्र 'शयितव्यम्' इति प्रथमान्तं पदम् । तत्समानाधिकरणम् अस्ति-पदमावश्यकं प्रथमायाः साधुत्वे । न च दृश्यते इति बोध्यम् ।

**पूर्वपक्षिणः** – पूर्ववाक्ये अस्तिपदम् अध्याह्रियते । अतः प्रथमायाः साधुत्वं भविष्यति । न च सुबन्तचयपर्याप्तत्वं तर्हि वाक्यस्य कथमिति

आक्षेपः । वार्तिकस्य एवमभिप्रायवर्णनात् । तथाहि – "तिङ् समानाधिक-रणयोग्यत्वं यस्याः प्रथमायाः अस्ति तस्य साधुत्वमि"ति ।

प्रकृते 'चैत्रेण शयितव्यम्' इत्यत्र 'शयितव्यमि'ति प्रथमायाः तिङ्समा-नाधिकरणयोग्यता अस्ति । यथा – "चैत्रेण शयितव्यं वर्तते, अस्ति" इत्यादि । अतः विनापि अत्र अस्तिपदं प्रथमायाः साधुत्वम् ।

**सिद्धान्तिनः** – एवं सति क्रियापदरहितस्थलं भवद्भिरङ्गीक्रियते । अतः क्रियापदरहितं स्थलं न अतात्विकम् ।

**पूर्वपक्षिणः** – क्रियापदवद्वाक्यमेव तात्विकम् । दृश्यन्ते च इमानि अनुशासनानि —— 'अस्तिर्भवन्तीपरः प्रथमपुरुषः अप्रयुज्यमानोप्यस्ति ' । 'तिङ्-समानाधिकरणे प्रथमा', 'यत्नेन विना अस्तिभवत्योः सर्वत्र अध्याहा-रः' ।

**सिद्धान्तिनः** – इदं न युक्तम् । यतः इमानि अनुशासनानि सर्वेषां पुरुषाणां नियामकानि न भवितु- मर्हन्ति । सर्वेषाम् अनुशासनज्ञाना-भावात् । तादृशेषु पुरुषेषु क्रियापदरहितस्थलेऽपि 'मूर्खाभिन्नश्चैत्रः' इत्यत्र बोधः भवत्येव । अतः प्रथमान्तार्थमुख्यविशेष्यकः बोधः नैकेषु स्थलेषु विना क्रियापदं क्लृप्तः इति सर्वत्र असति बाधके तस्यैव स्वीकारः युज्यते ।

## नैय्यायिकरीत्या प्रकृतिप्रत्ययाद्यर्थविवेचनम्

'पचति तण्डुलं चैत्रः' अत्र चैत्रपदं, सुपदम्, । तण्डुलपदं, अम्पदम् , पच्-पदम्, तिप्-पदम् इति आापाततः पदषट्कं दृश्यते । अत्र बोधः – तण्डु-लनिष्ठकर्मतानिरूपकपाकानुकूलकृतिमान् एकत्वविशिष्टः चैत्रः- इति । अत्र तण्डुलरूपप्रातिपदिकस्य अर्थः तण्डुलत्वविशिष्टतण्डुलम् । द्वितीयार्थः कर्म-

त्वम् । तच्च प्रातिपदिकार्थविशेष्यम् । एवञ्च तण्डुलनिष्ठकर्मता । यतः अनु-शासनम् एवम् – प्रातिपदिकार्थ- विशेष्यतया कर्मत्वादौ विवक्षिते एव द्विती-यादयः भवन्ति - इति ।

कर्मत्वस्य च साकाङ्क्षपदार्थतया निरूपकापेक्षासत्वात् धात्वर्थे पाके कर्मत्वम् अन्वेति । एवञ्च तण्डुलत्वविशिष्टतण्डुलनिष्ठकर्मत्वनिरूपकः पाकः । पाकस्य च आख्यातार्थकृतौ अन्वयः । एवञ्च तण्डुलत्व-विशिष्टतण्डुलनिष्ठकर्मत्वनिरूपकपाकानुकूला कृतिः । अस्याः प्रथमान्तार्थे चैत्रे अन्वयः । एवञ्च तण्डुलत्व- विशिष्टतण्डुलनिष्ठकर्मत्वनिरूपकपाकानुकू-लकृतिमान् चैत्रः । 'प्रकृतिप्रत्ययौ सहार्थं ब्रूतः तयोः प्रत्ययार्थः प्रधानः' इति व्युत्पत्तिमनुसृत्य आख्यातार्थस्य कृतेः प्राधान्यमस्ति । चैत्रः इत्यत्र प्रथमायाः सङ्ख्यार्थकत्वम् । सङ्ख्यायाश्च प्रकृत्यर्थे चैत्रे विशेषणतयाऽन्वयः । अतश्च तण्डुलत्वविशिष्टतण्डुलनिष्ठकर्मत्वनिरूपकपाकानुकूलकृतिमान् एकत्वविशि-ष्टश्चैत्रः ।

## आख्यातार्थस्य कुत्रान्वयः

'आख्यातार्थस्य कर्तृत्वस्य प्रथमान्तप्रकृत्यर्थे विशेषणतयान्वयः' इति तावदुक्तं पूर्वत्र । अत्र आशङ्का – "अभिहिते प्रथमा" इति वार्तिकबलात् 'चैत्रः पचति' इत्यत्र प्रथमायाः अन्याभिहितार्थकत्वम् । अन्याभिहितार्थश्च कर्तृत्वम् । तच्च आख्याताभिहितम् । अतः आख्यातार्थे कर्तृत्वे प्रकृत्यर्थस्य विशेषणतयाऽन्वयः इति भाति । तन्न । यतः उक्तार्थानामप्रयोगः इति नियमानुसारेण अन्याभिहितार्थकत्वे प्रथमायाः तदर्थकत्वस्वीकारः अयुक्तः । अन्यार्थकत्वमेव न्याय्यम् । अत्र परिहारः – भिन्नार्थकत्वमेव आख्यातप्रथ-माविभक्त्योः वर्तते । तथाहि – आख्यातः सामान्यतः कर्तृत्वं बोधयति ।

प्रथमा तु कर्तृत्वं चैत्रनिष्ठं बोधयति । एवं स्वीकारे उभयविधकर्तृत्वबोधनार्थम् उभयोरपि प्रत्यययोः कर्तृत्वार्थकत्वं युज्यत एव । अयमपि पक्षः न युक्तः । यतः चैत्रवृत्तिकर्तृत्वबोधनं च अन्यथासिद्धम् । अर्थात् आख्यातार्थस्य अविशेषितकर्तृत्वस्य प्रथमान्तार्थे चैत्रे अन्वयादेव चैत्रवृत्तिकर्तृत्वं लभ्यत इति तद्बोधनिर्वाहः सम्भवति ।

अत्र आशङ्का — आख्यातप्रत्ययाभिहितकर्तृत्वं तदर्थभावनायामेव अन्वेति । न प्रथमान्तार्थे चैत्रे इति चैत्रवृत्तिकर्तृत्वबोधनार्थं प्रथमाया अपि कर्तृत्वार्थकत्वं स्वीकरणीयम् । परिहारश्च – कर्तृत्वस्य कृतिव्यतिरिक्तस्य सत्वे मानं नास्ति । प्रथमाविभक्तिप्रयोजकत्वं च कृतिरूपकर्तृत्वस्यैव ।

आशङ्का — तर्हि प्रथमां प्रति कृत्यभिधानस्य प्रयोजकत्वे भावाख्यातस्थले कर्तृवाचकपदात् प्रथमा स्यात् । उदाहरणम् – "चैत्रेण सुप्यते" इति । अत्र चैत्रपदोत्तरं प्रथमा स्यात् । तथाहि –'चैत्रेण सुप्यते' इत्यस्य एवं विवरणम् – 'चैत्रेण स्वापः क्रियते' इति । अत्र भावाख्यातेन कृतिरभिहिता इति कृत्यभिधानरूपप्रयोजकसद्भावात् प्रथमा प्रवृत्तिः । तत्रोच्यते – 'चैत्रेण सुप्यते' इत्यत्र तृतीयया स्वापनिरूपितं कर्तृत्वं बोध्यते । तस्याः कर्तृत्वरूपकृतेः धात्वर्थे स्वापे अन्वयः । 'चैत्रेण स्वापः क्रियते' इत्यत्र तु तृतीयया कृञ्धात्वर्थनिरूपितमेव कर्तृत्वमाश्रयत्वरूपं बोध्यते । न स्वापनिरूपितं कर्तृत्वम् । तच्च धात्वर्थकृतौ अन्वेति । एवञ्च विवरणवाक्यात् बोधः चैत्रवृत्तिर्या कृतिः तन्निरूपिता या साध्यताख्या विषयता तदाश्रयः स्वापः इति । एवंरीत्या आख्यातार्थं प्रति विवरणरूपत्वं कृञ्धातोः नास्तीति भावाख्यातस्य आख्यातबोधकत्वा- भावेन चैत्रपदोत्तरं न प्रथमा । अपि तु तृतीया एव । तर्हि अभिहिते प्रथमा इति वार्तिकस्य कोऽर्थः? उच्यते – प्रातिपदिकार्थनिष्ठं

कर्तृत्वम् यत्र समभिव्याहृतआख्यातादिना अभिहितं तादृशस्थले प्रातिपदिकात् परत्र प्रथमा । अतः प्रथमान्तार्थस्य न कुत्रापि विशेषणतयाऽन्वयः ।

## आख्यातार्थमुख्यविशेष्यकबोधः उत प्रथमान्तार्थमुख्यविशेष्यकबोधः

आख्यातार्थश्च भावना । सा च व्यापाररूपा व्यापारिणम् अपेक्षते । प्रथमान्तार्थश्च व्यापाररहितः व्यापारम् अपेक्षते । एवं परस्परापेक्षिणोरेतयोः परस्परमन्वयः ।

यथा **न्यायकुसुमाञ्जलौ** –

"न ह्यन्यतराकाङ्क्षा अन्वयहेतुः अपि तु उभयाकाङ्क्षा । प्रातिपदिकार्थो हि फलेन अन्वयमलभमानः क्रियासम्बन्धमपेक्षते । भावनाऽपि व्यापारभूता-सती व्यापारिणम् इति उभयाकाङ्क्षा अन्वयहेतुः इति । अत एव अनुभवोऽपि यावदुक्तं भवति पाकानुकूलवर्तमानयत्नवान् तावदुक्तं भवति 'पचति' " – इति ।

पूर्वोक्तवचनानुसारेण आकाङ्क्षावतोरुभयोः परस्परमन्वयेऽपि अस्ति वै-शिष्ट्यम् । प्रथमान्तार्थस्य विशेष्यत्वेनान्वयः । आख्यातार्थस्य प्रकारत्वेना-न्वयः ।

वैपरीत्यं किमर्थं न वाच्यम् इत्यत्र अयं हेतुः । प्रयोगानुसारेण प्रथमा-न्तार्थस्यैव मुख्यविशेष्यत्वं यथा "पुरुषः प्रयाति तस्य पादयोरभिवादय" इति वाक्ये प्रयुक्ते तच्छब्दपरामृष्टः कः? इति जिज्ञासायाः सर्वनाम्नां प्रधानपरामर्शक-त्वस्वाभाव्यात् क्रियान्वयिनं पदार्थं परामृशति । प्रकृते च पुरुष एव अभिवा-दनक्रियान्वयी । अतः स एव परामृष्टः । अतः 'पुरुषः प्रयाति' इति वाक्यज-

न्यबोधः न आख्यातार्थमुख्यविशेष्यकः । अपि तु प्रथमान्तार्थमुख्य-विशेष्यकः ।

अपरश्च प्रयोगः - "यो यः शूद्रस्य पचति द्विजः अन्नं सः अतिनिन्दितः" इति । अत्र "सः निन्दित " इत्यत्र तच्छब्दपरामृष्टः द्विजः एव । अतः पूर्व-स्मिन् वाक्ये "योः यः ... पचति" इत्यादौ प्रथमान्तार्थमुख्यविशेष्यकबोध एव वर्णनीयः । अन्यथा अग्रिमवाक्यस्थतत्पदेन प्रथमान्तार्थस्य द्विजस्य ग्रह-णाभावप्रसङ्गः ।

अपरं च प्रयोजनम् – यदस्ति बाधितं वाक्यम् अर्थात् निराकाङ्क्षं, तच्च प्रथमान्तार्थविशेषणत्वे एव आख्यातार्थस्य सम्भवति । तथा हि – "पचन् पचति" इति वाक्यं च निराकाङ्क्षबोधं जनयति । अयं च बोधः – "पाककृ-तिविशिष्टः पाककृतिमान्" इति । अस्य च बोधस्य अव्युत्पन्नत्वं नियमस-द्भावात् । नियमश्च तदधिकरणे तद्वैशिष्ट्यान्वय अनुपपन्न इति । प्रकृते पा-ककृत्यधिकरणे पाककृतिवैशिष्ट्यान्वयः । अतः अयं च बोधः निराकाङ्क्षः । एवं रीत्या एतस्य वाक्यस्य अप्रामाणिकत्वोपपादनाय प्रथमान्तार्थ मुख्यविशे-ष्यकबोधस्वीकार एवोचितः ।

अथ च वृत्तिविग्रहवाक्ययोः समानविशेष्यकसमानप्रकारकबोधजनकत्व-मभ्युपगम्यते । तुल्यरीत्या विवरणवाक्यस्य विव्रियमाणवाक्यस्य च बोधः, समानप्रकारकः समानविशेष्यकश्च भवेत् । यथा "वैयाकरणः" इति तद्धितवृ-त्त्या "व्याकरणमधीते" इति तद्विग्रहवाक्येन च बोधः समानप्रकारकः समान-विशेष्यकश्च भवेत् । अत्र प्रकारः व्याकरणाध्ययनम् । विशेष्यश्च तत्कर्ता । एतौ च उभयत्रापि प्रतिपाद्यौ ।

अपि च "चैत्रः पचति" इत्यनेन शाब्दबोधे जाते यः संशयः निवृत्तः, तदनुकूल एव बोधः पूर्ववाक्ये वर्णनीयः । अत्र च "चैत्रः पाकानुकूलकृति-

मान् वा न वा" इति सन्देहः निवर्त्यमानः "चैत्रः पाकानुकूलकृतिमान्" इति बोधमेव आक्षिपति ।

एवं च नैकेषु स्थलेषु प्रथमान्तार्थमुख्यविशेष्यकबोधस्वीकारे एव आनुकूल्यात्, क्लृप्तत्वं च स्वीकृत्य सर्वत्र ईदृश एव बोधः अभिप्रेतः नैयायिकैः, न तु आख्यातार्थमुख्यविशेष्यकबोधः, न वा धात्वर्थमुख्य- विशेष्यकबोधः ।

## प्रथमान्तमुख्यविशेष्यकबोधः यास्काचार्याभिमतो न वा?

"भावप्रधानमाख्यातम्" इति हि यास्कवचनम् ।

अयमाक्षेपः नैय्यायिकानां मते भवेत् । तथाहि - भावश्च भावनापर-पर्यायः। कृतिरिति यावत् । तत्प्रधानकं च आख्यातमिति अस्य वाक्य-स्यार्थः । फलितार्थश्च धात्वर्थः भवति प्रकारः । तन्निष्ठप्रकारतानिरूपितविशे ष्यता आख्यातार्थे इति । अयं च अर्थविवरणप्रकारः अयुक्तः । अस्यार्थस्य "प्रकृतिप्रत्ययौ सहार्थं ब्रूतः तयोऽस्तु प्रत्ययार्थः प्रधानः" इति नियमान्तरेणैव गतार्थत्वात् इत्येकः दोषः भावाख्याते च अव्याप्तिरिति द्वितीयः । यतः भावाख्यातार्थस्थले धात्वर्थस्यैव मुख्यविशेष्यतया भानम् ।

अत्र परिहारः – भावप्रधानमिति नियमार्थः "प्रकृतिप्रत्ययौ सहार्थं ब्रूतः तयोर्मध्ये प्रत्ययार्थः प्रधानः" इति नियमान्तरेण न गतार्थः, अन्यथासिद्ध-त्वात् । न च "प्रकृतिप्रत्ययौ सहार्थं ब्रूतः तयोर्मध्ये प्रत्ययार्थः प्रधानः" इति नियमः सुप्प्रत्ययमात्रविषयः इति वाच्यम् । सङ्कोचे मानाभावात् । अतः युक्तमस्य अन्यथासिद्धत्वम् ।

तत्प्रकारश्च एवम् – आख्यातार्थाः भवन्ति बहवः कालसङ्ख्याभावनारूपाः, तेषु अर्थेषु कस्य मुख्यविशेष्यत्वम् इति आकाङ्क्षायाम् भावनायाः एव सर्वतः प्राधान्यम् इत्यर्थमेव बोधयति भावप्रधानमाख्यातार्थमिति नियमः ।

तदत्र सङ्गृहीतम् अभियुक्तैः –

**भावप्रधानमाख्यातम् इति निर्वचनस्मृतेः ।**
**आख्यातार्थेषु भावस्य प्राधान्यमनुशिष्यते ॥**

अस्य विवरणम् – भावो नाम भावना । सा च प्रयोगभेदेन नानाविध-व्यपदेशभाक् भवति । यथा कर्तरि आख्याते भावपदार्थः कर्तृत्वम्, कर्मणि आख्याते भावपदार्थः कर्मत्वम्, रथो गच्छतीत्यादिषु भावपदार्थः आश्रयत्वम्, घटो नश्यतीत्यादिषु भावपदार्थः प्रतियोगित्वम् ।

एवं च **तात्पर्यार्थः** अस्य नियमस्य । धातुनिष्ठवाचकतानिरूपितवाच्य-ताश्रयः यः अर्थः तन्निष्ठा या प्रकारता तन्निरूपिता या भावनानिष्ठविशेष्यता तच्छाली यः बोधः तज्जनकम् आख्यातम् इति ।

इदं च समाधानमयुक्तम् – यतः आख्यातार्थेषु भावनायाः प्रधानत्वं बोध-यत्ययं नियमः इति स्वीकारे, आख्यातार्थसङ्ख्यायाः भावनायाः दत्तस्थलानु-रोधेन सम्बन्धभेदेन अन्वये शाब्दबोधस्य अधिकविषयकत्वेन गौरवं स्यात् । तद्यथा – कर्तरि आख्याते भावनायामाख्यातार्थसङ्ख्यायाः स्वाश्रयसमवेतत्व-सम्बन्धेनान्वयः । स्वं = सङ्ख्या तदाश्रयः = कर्ता प्रथमान्तार्थाः तत्समवेता भावना ।

कर्मण्याख्यातस्थले च सङ्ख्यायाः अनेन सम्बन्धेन भावनायाम् अन्वयः । सम्बन्धश्च "चैत्रेण ओदनं पच्यते" इत्यत्र स्वाश्रयकर्मादिनिष्ठफलजनकक्रि-यानुकूलत्वं स्वं = सङ्ख्या । तदाश्रयं = तण्डुलम् । तन्निष्ठं फलम् = विक्लि-त्तिः । तज्जनिकाक्रिया = पाकरूपाक्रिया तदनुकूलत्वं कृतौ इति यावत् ।

एवञ्च एतेऽधिकाः पदार्थाः शाब्दबोधे विषया भवन्तीति अधिकविषयक-त्वेन गौरवम् । अतः आख्यातार्थसङ्ख्याद्यपेक्षया भावनायाः प्राधान्यं बोधयति

इदं निरुक्तमिति वक्तुं न शक्यते । अथापि भावे यत्र आख्यातप्रत्ययः तत्स्थले अव्याप्तिः तथैव । यथा "चैत्रेण सुप्यते" इत्यत्र बोधः चैत्रकर्तृकस्वापाश्रय-त्वम् इति । अस्य विवरणम् "चैत्रनिष्ठा या कर्तृता तन्निरूपकः यः स्वापः तदाश्रयत्वम्" इति । अत्र धात्वर्थः स्वापः । स च भावनायां प्रकारः । भावना च अत्र आश्रयत्वरूपा । सा च विशेष्या । एवञ्च धात्वर्थप्रकारकआश्रयत्व-रूपभावनाविशेष्यकः बोधः जायते ।

वर्णितः बोधश्च शिरोमणिसम्मतोऽपि । तद्यथा – "चैत्रेण सुप्यते" "गगनेन स्थीयते" इत्यादौ प्रथमान्तपदाभावात् धात्वर्थस्य भावनायाः विशे-षणतयैव अन्वयस्य व्युत्पन्नत्वात् भावनायाः बाधितत्वाच्च भावनाविशेष्यविर-हात् अनन्वितैव सङ्ख्या । एकवचनं तु साधुत्वार्थम् । – इति **आख्यात-वादे** ।

अत्र "भावनाविशेष्यविरहात्" इति पदस्वारस्येन 'चैत्रेण सुप्यते', गगनेन स्थीयते इत्यादिषु भावाख्यातस्थलेषु भावनाविशेष्यकबोधः एव । न तु इतर-विशेष्यकभावनाविशेषणकबोधः ।

ननु "भावनाविशेष्यविरहात्, भावनायाः विशेषणतयैव अन्वयस्य व्यु-त्पन्नत्वात्" इति वाक्यपर्यालोचने भावनायाः विशेषणत्वमेव अत्र ग्रन्थे प्रति-पाद्यते इति न शङ्क्यम् ।

यतो हि "भावनायाः अबोधात्" इति लाघवेनैव तादृशार्थकत्वेऽभिप्रेते निर्दिशेत् । न तु भावनाविशेष्यविरहात् इत्यादिना । एवञ्च स्मृत्यनुसारी अयं बोधः । नातः भावाख्यातेऽव्याप्तिः ।

* * * *

## निरुक्तवचनस्य क्वचित् सङ्कोचकरणे शाब्दिकानां सम्मतिः

वैय्याकरणाः – "भावप्रधानमाख्यातमि"ति निरुक्तवचनं प्रमाणीकृत्यैव सर्वत्र व्यवहरन्ति । परन्तु क्वचित्स्थलविशेषे तद्वचनमादायैव अन्यथाऽपि वर्णनं कृतं दृश्यते । यथा "वैय्याकरणः" इत्यादिवृत्तिस्थले । अयं भावः – "वैय्याकरणः" इति तद्धितवृत्तिः । विग्रहश्च "व्याकरणम् अधीते वेद वा" यः सः वैय्याकरणः इति । अस्यार्थः – यः केवलं सूत्रपाठकः अथवा तेन सह तदर्थज्ञोऽपि स वैय्याकरणः इत्युच्यते । सूत्रं च – "तदधीते तद्वेद" इति पाणिनिप्रणीतम् ।

प्रकृते वैय्याकरणः इत्यस्मात् वृत्तिरूपात् बोधः एवं वर्ण्यते – वैय्याकरणपदवाच्यः व्याकरणा- ध्ययनकर्ता इति । अस्तु प्रकृते किमायातम्? इत्यत्र इदमुत्तरम् – विवरणवाक्ये "व्याकरणमधीते वेद" इति वाक्ये तिङन्तपदमस्ति । तत्र धात्वर्थमुख्यविशेष्यकबोधः नैव वर्णितः अपि तु प्रथमान्त- मुख्यविशेष्यकबोधः । अन्यथा वृत्तिविग्रहवाक्ययोः समानविशेष्यकसमानप्रकारकबोधजनकत्वं न स्यात् । अत्र प्रमाणं भाष्यम् अनुभवोऽपि । अत्र वृत्तिः वैय्याकरण इति । विग्रहवाक्यं च व्याकरणमधीते वेद वा इति । उभयोरपि समानविशेष्यकबोधजनकत्वं समानप्रकारकबोधजनकत्वं च अपेक्षितम् । अर्थात् धात्वर्थस्य अध्ययनस्य प्रकारत्वं तत्कर्तुः विशेष्यत्वं वक्तव्यम् । एवं च बोधः यः अस्माद्वाक्याज्जायते सः ईदृशः । व्याकरणाद्ध्ययनरूपधात्वर्थप्रकारकः तत्कर्तृमुख्यविशेष्यकः ।

अत्र **भर्तृहरिसम्मतिः** –

क्वचित् गुणप्रधानत्वमर्थानामविवक्षितम् – इति उपक्रम्य –

**आख्यातं तद्धितकृतोः [1]यत्रार्थस्योपदर्शकम् ।**
**गुणप्रधानभावस्य तत्र दृष्टो विपर्ययः ॥**

अस्यां कारिकायां तद्धितादिस्थलेषु यत्र आख्यातं तत्र गुणप्रधानभावः विपरीतः दृष्टः इति विवृतम् । एवं च विपर्ययशब्दस्वारस्यात् क्वचिद्वैयाकरणैरपि वृत्तिविवरणस्थले सङ्कोचः आश्रितः । तथैवास्माभिरपि ।

## अग्रिमनिरुक्तग्रन्थविरोधः वर्तते न वा?

"भावप्रधानमाख्यातम्" इति वचनानन्तरं "यत्र उभे तत्र भावप्रधाने भवतः" इति, एवं "वाक्ये हि आख्यातं प्रधानम्......." इति ग्रन्थदर्शने धात्वर्थमुख्यविशेष्यकबोध एव निरुक्तकारैरभिप्रेतः इति ज्ञायते । अन्यथा "वाक्ये हि आख्यातं प्रधानम्" इत्याद्युत्तरग्रन्थासामञ्जस्यं स्यात् । उप-संहारानुसारेण किल उपक्रमस्थस्य वाक्यस्य अर्थनिर्णयः प्रायः सर्वत्र क्रियते । यथैव पूर्वत्र वैय्याकरणः इति प्रथमं विद्यमानस्य चरमभाविना विवरणवाक्येन अर्थनिश्चयः क्रियते । अतः अग्रिमनिरुक्तग्रन्थविरोधात् न प्रथमान्तार्थमुख्य-विशेष्यकबोधः अङ्गीकारार्हः ।

उत्तरम् – नोत्तरग्रन्थासामञ्जस्यप्रसङ्गः । तथाहि – **निरुक्तग्रन्थश्च** -

**"वाक्ये हि आख्यातं प्रधानम् । तदर्थत्वात् गुणभूतं नाम । तदर्थस्य भावनिष्पत्तौ अङ्गत्वात् । एवं तावत् वाक्ये आख्यातं प्रधानम् ।" इति ।**

अत्र वैय्याकरणोक्तार्थापेक्षया अन्य एव अर्थः अनेन ग्रन्थेन प्रतिपाद्यते इति ज्ञेयः । स च अन्यार्थः एवम् –अत्र आख्यातस्य प्राधान्यं प्रतिपाद्यत इति

(1) आख्यातं तद्धितार्थस्य यत्किञ्चिदुपदर्शकम् – इति पा.

स्पष्टम् । तत्र किं कारणम्? इति विचारे, इतरापेक्षितत्वरूपमेव प्राधान्यम् अत्र वाक्ये प्रतिपाद्यते, न तु तदर्थमुख्यविशेष्यत्वम् । यथा "नदीतीरे पञ्च फलानि सन्ति" अथवा "सुन्दरः मूर्खः चैत्रः" इत्यादिस्थलेषु वाक्यप्रति- पाद्यपदार्थेषु कस्य पदार्थस्य मुख्यत्वम्? इति विचारे यदर्थमपेक्ष्य ये अर्थाः सन्ति सः, अर्थादपेक्षणीयार्थः एव मुख्यः । एवं यदर्थप्रतिपादनपराणि इतरपदानि तत्प्रधानमिति उच्यते । तद्वत् प्रकृते कारकाणामपेक्षा क्रियानिष्पत्त्यर्थमेव । अतः क्रियायाः एव प्राधान्यम् इति इतरापेक्षितत्वरूपं प्राधान्यम् आख्यातस्य अनेन वाक्येन बोध्यते । न तु तदर्थविशेष्यकबोधः एव मुख्यः इति ।

अथ च प्राधान्यं तस्य मुख्यविशेष्यत्वेनैवेति न नियमः । विधेयत्वनिबन्धनमपि स्यात् । यथा "चैत्रः पचति" इत्यत्र किमत्र चैत्रे विधेयम्? इति प्रश्नस्य इदमुत्तरम् – चैत्रमुद्दिश्य पाकानुकूलकृतिमत्वं विधीयते इति । एवंरीत्या विधेयभूता पाकानुकूला कृतिः इति तस्याः प्राधान्यम् इति । आहत्य – अग्रिमनिरुक्तग्रन्थस्यान्यथासिद्धार्थप्रतिपादकत्वेन न तद्विरोधः प्रथमान्तार्थमुख्यविशेष्यकबोधवादिनाम् ।

## धात्वर्थमुख्यविशेष्यकबोधः न प्राचीननैय्यायिकाभिमतः

**न्यायवार्तिके –**

क्रियाकालयोगाभिधायि क्रियाप्रधानमाख्यातम् ।

अत्र क्रियाप्रधानमाख्यातमिति ग्रन्थदर्शनेन धात्वर्थमुख्यविशेष्यकबोधः अभिप्रेतः ग्रन्थकर्त्रा इति भाति । परं न । तर्हि क्रियाप्रधानमित्यस्य कोऽभिप्रायः? इत्युक्ते – क्रियान्तरानाकाङ्क्षितत्वरूपमेव । अर्थात् यद्वाक्यस्थक्रियापदवाच्या क्रिया क्रियान्तराकाङ्क्षोत्थापिका न । तद्वाचकपदोपेतं वाक्यं क्रियाप्रधानकम् इति । यथा "चैत्रः पचति" इति ।

**न्यायभाष्ये** –

"क्रियाकारकसमुदायः, कारकसङ्ख्याविशिष्टक्रियाकालयोगाभिधा(धं) वा आख्यातम् । धात्वर्थमात्रं च कालाभिधानविशिष्टम्" – इति ।

अत्र तृतीयमाख्यातलक्षणम् "कालरूपाभिधानविशिष्टधात्वर्थबोधकत्व-म्" इति । अनेन ग्रन्थेन न न्यायभाष्यकारेण धात्वर्थमुख्यविशेष्यकः बोधः अभिप्रेतः इति तद्व्याख्यानेषु वर्णितः ।

## निरुक्तवचनस्य पक्षान्तराभिप्रायेण प्रवृत्तत्वप्रतिपादनम्

"भावप्रधानमाख्यातम्" इति निरुक्तवचनम् । अस्याभिप्रायः एवं वर्णितः – प्रत्ययाः कर्त्रादि वाचकाः न तु द्योतकाः इति । अत्र महाभाष्यकार-सम्मतिरपि – पञ्चकस्य धात्वर्थत्वमङ्गीकृत्य कारकादीनां प्रत्ययवाच्यत्वमपि अङ्गीकृतम् ।

अयमभिप्रायः – धात्वर्थः सकलकारकसङ्ख्याविशिष्टभावना । नामार्थश्च सत्ता द्रव्यं लिङ्गं सङ्ख्या इति । एवं च कारकस्य न नामार्थत्वम्, अपि तु धात्वर्थत्वम् । अत एव पञ्चकं धात्वर्थः इत्यपि सङ्गच्छते ।

"पञ्चकं धात्वर्थः" इति पक्षे धात्वर्थो नाम कारकादिविशिष्टक्रिया । परं एवमर्थकत्वे (१) समानाकारसूत्राणां विभिन्नार्थकत्वस्वीकारापत्तिः । (२) चैत्रमैत्रो पचतः इति वाक्यस्याप्रामाण्यम् । (३) पदार्थस्य पदार्थैकदेशे अन्वयापत्तिः । (४) प्रथमान्तपदस्य नपुंसकत्वापत्तिश्च इति दोषचतुष्टयम् ।

अस्य विवरणम् —

प्रथमः दोषः — समानाकारसूत्रे च "लः कर्मणि च भावे च अकर्मके-भ्यः" (पा.सू. ३-४-६९) "कर्तरि कृत्" (पा.सू. ३-४-६७) इति ।

प्रथमसूत्रार्थः – लकाराः सकर्मकेभ्यः कर्मणि कर्तरि च भवन्ति । अकर्मकेभ्यः भावे कर्तरि च इति । सूत्रस्थसप्तम्याः वाचकत्वं द्योतकत्वं वा? अर्थः इति संशयः । द्योतकत्वमिति सिद्धान्तितम् । कारकस्य धात्वर्थत्वात् प्रत्ययस्य तदर्थद्योतकत्वात् । द्योतकत्वं च स्वसमभिव्याहृतशब्दार्थनिष्ठशक्त्युद्बोधकत्वम् । स्वसमभिव्याहृतः यः शब्दः तस्य यो अर्थः तन्निष्ठा या शक्तिः पदनिरूपिता तन्निष्ठउद्बोध्यता निरूपितोद्बोधकतावत्त्वम् । यथा प्रकृते पच् धातोः कारकविशिष्टपचनरूपक्रिया अर्थः ।अयं च पच्शब्दः तिप्प्रत्ययसमभिव्याहृतः । तदर्थः – कर्त्रादिकारकविशिष्टधात्वर्थरूपः । तन्निष्ठा या पच् निरूपिता शक्तिःतदुद्बोध्यतानिरूपितोद्बोधकतावत्त्वं तिपि इति तिपः द्योतकत्वम् ।

"कर्तरि कृत्" इति सूत्रे "कर्तरि" इत्यत्र सप्तम्याः वाचकत्वमर्थः । एवं च धातोः कर्तृवाचकः कृत्प्रत्ययः भवति इति । एवमेकत्र प्रत्ययस्य वाचकत्वम् अपरत्र द्योतकत्वमिति समानाकारत्वेपि सूत्रस्य अर्थात् "कर्मणि लः", "कर्तरि कृत्" इति स्थितेऽपि वाचकतारूपं बोधकत्वम् , द्योतकतारूपं बोधकत्वम् इति विभिन्नार्थकत्वस्वीकारापत्तिः ।

द्वितीयः दोषः — "चैत्रमैत्रौ पचतः" इत्यत्र क्रियायां सङ्ख्यायाः आरोपः वाच्यः इति तस्य वाक्यस्याप्रामाण्यम् । न च 'एका क्रिया' इति भाष्यप्रयोगात् क्रियायां सङ्ख्यावत्त्वं प्रसिद्धम् इति नात्र सङ्ख्यायाः आरोपः । सत्यम् । तद्भाष्यबलात् (अर्थात् एका क्रिया इति भाष्यबलात्) क्रियायाम् एकत्वसङ्ख्या तावत्प्रतीयते । न तु द्वित्वादिसङ्ख्या । अत एव "चैत्रमैत्रौ पचतः" इति द्विवचनोदाहरणम् । न चात्र आरोपे क्रियमाणे अन्यत्र स्थितिः नास्तीति कथमारोपः? इति वाच्यम् । चैत्रमैत्रगतद्वित्वसङ्ख्याया एव क्रियायाम् आरोपात् । एवञ्च आरोपितद्वित्वसङ्ख्याविशिष्टबोधकत्वात् अर्थात् द्वित्वाभाववति द्वित्वप्रकारकबोधजनकत्वादिदम् अप्रमाणम् ।

तृतीयः दोषः —— "चैत्रःपचती"त्यत्र कारकविशिष्टक्रियायाः पच्धात्वर्थत्वे, प्रथमान्तार्थस्य चैत्रस्य अभेदेन धात्वर्थैकदेशे, अर्थात् पदार्थैकदेशे अभेदेन अन्वयापत्तिः । अयं चान्वयः "पदार्थः पदार्थेन अन्वेति न तु तदैकदेशेन" इति व्युत्पत्तिविरुद्धः । पदार्थः = चैत्रपदार्थः पदार्थेन अन्वेति = पच्धात्वर्थे कारकविशिष्टक्रियारूपेऽर्थे सम्बध्नाति न तु पदार्थैकदेशेन = धात्वर्थैकदेशभूतकारकेण । अतः कारकविशिष्टक्रियायाः धात्वर्थत्वाभावात् न पञ्चकं धात्वर्थः इति पक्षः युक्तः ।

न च "पदार्थः पदार्थेनान्वेति न तु तदैकदेशेन" इति नियमः अप्रामाणिकः । "घटो नित्यः" इत्यस्य प्रामाण्यपरिहार एव प्रमाणम् । यथा अस्माद्वाक्याद्बोधः नित्यत्वविशिष्टो घटः इति । अयं च बाधितः । घटस्यानित्यत्वात् । अतः बाधितार्थबोधकत्वेनास्याप्रामाण्यम् । अस्य नियमस्यानङ्गीकारे इदं वाक्यं प्रमाणं स्यात् । तथाहि – घटपदार्थः घटत्वविशिष्टो घटः । नित्यपदार्थः नित्यत्वम् । पदार्थस्य नित्यत्वस्य पदार्थान्तरे घटत्वविशिष्टघटे अन्वययोग्यताभावेऽपि तदैकदेशे घटत्वे अन्वये योग्यतासत्वात् अर्थात् घटत्वस्य नित्यत्वात् न बाधितार्थबोधकमिदम् । इदानीं च बोधः नित्यत्वविशिष्टं यद्घटत्वं तद्विशिष्टो घटः इति ।

चतुर्थः दोषः —— कथञ्चित् एकदेशान्वयस्वीकारेऽपि "चैत्रः पचती"-त्यादिस्थलेषु चैत्रपदस्य नपुंसकत्वापत्तिः ।

यथा – "स्तोकं पचती"त्यत्र क्रियाविशेषणस्थले "क्रियाविशेषणानां कर्मत्वं क्लीबता च" इत्यनुशासनबलेन धात्वर्थविशेषणस्य क्लीबत्वमपि इति स्वीकारात् । प्रकृते स्तोकपदार्थस्य पच्धात्वर्थे अन्वयेन "स्तोकमि"ति नपुंसके प्रयोगः । तथैव प्रकृते "चैत्रः पचती"त्यत्र चैत्रस्य पच्धात्वर्थे अन्वये

"चैत्रम्" इति प्रयोगः स्यात् । अतः वैय्याकरणैः पञ्चकं धात्वर्थः इत्यादिपक्षः नैव स्वीकारार्हः । अतश्च आकरग्रन्थव्युत्पादितेषु यः पक्षः युज्यते स एव तत्र ग्राह्यः ।

अतः इदं "भावप्रधानमाख्यातमि"ति निरुक्तवचनं कर्त्रादिवाचकत्वं प्रत्ययानाम् इत्यर्थवर्णनपरतया योजितम्, कथं प्रत्ययार्थापेक्षया धात्वर्थस्य प्राधान्यविषये उपन्यासः कर्तुं शक्यते? इति वैय्याकरणैरेव अन्यथावर्णनस्य कृतत्वात्, न अनेन वाक्येन धात्वर्थमुख्यविशेष्यकबोधः वर्णयितुं शक्यः ।

## निरुक्तानुसारेणैव बोधः वर्णनीयः इत्यत्र न निर्बन्धः

निरुक्तं प्रमाणीकुर्वन्तः वैय्याकरणाः एवं स्वग्रन्थेषु प्रतिपादयन्ति ।

यथा अष्टाध्याय्यां पाणिनिना –

"प्रधानप्रत्ययार्थवचनम् अर्थस्यान्यप्रमाणत्वात्" - (१-२-५६)

अस्यार्थः – प्रत्ययस्य अर्थः प्रधानमिति वचनं न कार्यम् । यतः अर्थस्य तथा बोधस्य अन्यप्रमा- णत्वात् । व्युत्पत्त्यनुसारित्वात् । इति सर्वत्र बोधः व्युत्पत्तिमवलम्ब्यैव क्रियते न तु निर्णायकमपेक्षते एव। **वैय्याकरणभूषणसारे** च –

"विशेष्यत्वात् भावना प्रत्ययस्यैवार्थः न धातोः" इति पक्षनिराकरणावसरे "उत्सर्गोऽयम् । विशेष्यत्वादिना बोधस्तु तथा व्युत्पत्त्यनुरोधात् अत एव नैय्यायिकानां प्रथमान्तार्थमुख्यविशेष्यक एव बोधः । अत एव "प्रधानप्रत्यार्थवचनमर्थस्यान्यप्रमाणत्वात्" इति भगवान् पाणिनिः प्राह । प्रधानं प्रत्ययस्य अर्थः इति वचनं न कार्यम् । अर्थस्य = तथा बोधस्य अन्यप्रमाणत्वात् व्युत्पत्त्यनुसारित्वात् इति तदर्थः । एवं सत्यपि नियामक-अपेक्षणे च भावप्रधानमाख्यातम् इति वचनमेव गृह्यताम् ।"

इमानि च वाक्यानि नैय्यायिकमतं समर्थयन्तीव दृश्यन्ते । तथाहि – तत्तद्विशेष्यकबोधे न नियामकतया किमपि वचनमपेक्षितमिति 'एवं सत्यपि नियामकापेक्षणे भावप्रधानमाख्यातमिति वचनमेव गृह्यताम्' इत्यादिग्रन्थे "एवं सत्यपि" इति पदस्वारस्येन स्पष्टं ज्ञायते । अथ च स्वानुभवसिद्ध एव बोधः अत्र संवादी । एवञ्च गृह्यमाणेपि नियामकवचने "महर्षिवचनं भावप्र-धानमाख्यातमिति गृह्यताम्" इति रीत्या आख्यातपदरहितस्थलेषु "न हि परिणति सुरसं पनसफलम्" "पण्डितश्चैत्रः" "मूर्खश्चैत्रः" "तेजस्व्यहम्" इत्यादिषु स्थलेषु सिद्ध एव प्रथमान्तमुख्यविशेष्यकबोधः न तु आख्यातार्थमु-ख्यविशेष्यकबोधः ।

अपि च इयं प्रतिबन्दी वैय्याकरणान् प्रति – निरुक्तमहाभाष्ययोर्यदि विरोधः, न तत्र वैय्याकरणाः नियामकवचनतया निरुक्तं स्वीकुर्वन्ति, अपि तु महाभाष्यमेव आदरं कुर्वन्ति ।

एवञ्च निरुक्तानुसारेणैव बोधः वर्णनीयः इति न निर्बन्धः ।

## प्रथमान्तार्थविशेष्यकबोधे मूलप्रमाणं किं कार्यकारणभावः?

अत्र मूलयुक्तिरूपः कार्यकारणभावः । स च कल्पनालाघवमूलकः । एककार्यकारणभावकल्पनात् । तथाहि – "कालादिव्यतिरिक्तआख्यातार्थप्र कारकशाब्दबोधं प्रति अन्याविशेषणीभूतप्रथमान्तपदजन्योपस्थितिः कारणम्" इति आख्यातार्थसङ्क्षन्याभावना साधारणः कार्यकारणभावः ।

अस्य विवरणम् – कालादिव्यतिरिक्तः यः आख्यातार्थः तत्प्रकारकः यः शाब्दबोधः तं प्रति अन्याविशेषणीभूतं यत्प्रथमान्तं पदं तज्जन्या उपिस्थितिः कारणमिति ।

यथा 'चैत्रः पचति' इत्यत्र कालादिव्यतिरिक्तः यः आख्यातार्थः = तिबर्थः सङ्ख्या तत्प्रकारक- शाब्दबोधं प्रति अन्याविशेषणीभूतं यत्प्रथमान्तं पदं चैत्रः इति पदं तज्जन्या तदुपस्थितिः कारणम् ।

परन्तु अयं कार्यकारणभावः न प्रथमान्तार्थमुख्यविशेष्यकबोधे मूलयुक्तिः भवितुमर्हति । यतः कार्यकारणभावघटकः आख्यातत्वरूपो धर्मः नानुगतः । एवं "सुप्त्वं, तिङ्त्वम्" इत्यादि च नानुगतम् । अतः अननुगतानां धर्माणां कार्यकारणभावे समावेशो, न कार्यकारणभावः अनुगतः भवितुमर्हति, व्याघातात् । अपि च कार्यतावच्छेदकं किम्? इति विचारे, अर्थात् प्रथमा- न्तपदजन्योपस्थितिकार्यतावच्छेदकं किं भावनान्वयबुद्धित्वम् उत सङ्ख्यान्वयबुद्धित्वम्? इति विचारे क्रियमाणे, भावनान्वयबुद्धित्वमेव कार्यतावच्छेदकं भवितुं युक्तम् । यतः आख्यातार्थभावनां विहाय आख्यातार्थसङ्ख्याबोधः न कुत्राप्युदेति?

अपि च प्रथमान्तपदानुपस्थाप्ये न सङ्ख्यान्वयबोधः । व्याप्यधर्मावच्छिन्नजनकसामग्र्या कार्ये जननीये व्यापकधर्मावच्छिन्नजनकसामग्र्याः अपेक्षणात् । अत्र व्याप्यव्यापकभावः एवम् – "यत्र यत्र सङ्ख्यान्वयबोधत्वं तत्र तत्र भावनान्वयबोधत्वम्" । प्रकृते व्याप्यः = सङ्ख्यान्वयबोधत्वरूपो धर्मः । तज्जनिका या सामग्री, तया कार्ये जननीये, व्यापकधर्मः = भावनान्वयबोधत्वरूपः तज्जनिका सामग्री अपेक्षिता । सा च प्रथमान्तपदजन्योपस्थितिः, सा तु प्रकृते नास्तीति विवृण्वन्ति नैय्यायिकाः ।

एवञ्च मूलयुक्तिरूपः प्रथमान्तार्थमुख्यविशेष्यकशाब्दबोधे न कार्यकारणभावः ।

## शाब्दबोधहेतुत्वम् आख्यातपदजन्योपस्थितेरस्ति न वा?

"चैत्रः पचती"त्यत्र "पाकानुकूलकृतिमान् एकत्वविशिष्टश्चैत्रः" इति बोधं प्रति नाख्यातपदजन्यएकत्वोपस्थितिः कारणं भवितुमर्हति । तथाहि – बोधे एकत्वभानमावश्यकम् । तच्च आख्यातमन्तरेणापि सिद्धम् । प्रकृते "चैत्रः" इति प्रथमाविभक्तेरेव एकवचनरूपार्थोपस्थापिका इति, बोधे एकत्वभानं भवति । अयं च विचारः व्युत्पत्तिवादे विस्तरेण प्रतिपादितः ।

"चैत्रोमैत्रश्च गच्छतः" इत्यत्र कथम्? यतोत्र वाक्याज्जायमानशाब्दबोधे द्वित्वभानमावश्यकम् । तच्च विनैवाख्यातपदजन्योपस्थितिं न जायते । "चैत्रः मैत्रः" इत्यत्र सुबर्थस्य द्वित्वरूपत्वाभावात् ।

अत्रायं परिहारः — अत्र बोधः उभयथापि भवितुमर्हति । "गमनानुकूलव्यापारवन्तौ द्वित्वविशिष्टौ चैत्रमैत्रौ" इति । अथवा "एकत्वविशिष्टश्चैत्रः एकत्वविशिष्टः मैत्रः गमनानुकूलव्यापारवान्" इति । एवञ्च उभयपदजन्योपस्थितिरपि तत्तदर्थकबोधे कारणं भवितुमर्हति इति इति आख्यातपदजन्योपस्थितेः शाब्दबोधहेतुत्वं नास्त्येव ।

## निरुक्तवाक्यात् प्रथमान्तार्थमुख्यविशेष्यकबोधाङ्गीकारे एवानुकूल्यम्

"चैत्रो न पचती"ति नञ्-घटितवाक्यस्थले अयमन्वयक्रमः – आख्यातार्थभावनायाः नञर्थे स्वनिष्ठप्रतियोगितानिरूपकत्वसम्बन्धेन अन्वयः । आख्यातार्थसङ्ख्यायाश्च प्रथमान्तार्थे आश्रयतासम्बन्धेनान्वयः । एवञ्च अयं बोधः अपेक्षितः जायते –

पाकनिष्ठजन्यतानिरूपितजनकतावती या कृतिः तन्निष्ठा या प्रतियोगिता तन्निरूपकः यः अभावः तद्वान् यः एकत्वाश्रयश्चैत्रः । न चायं बोधः परमते

धात्वर्थमुख्यविशेष्यकबोधाङ्गीकारे सङ्गच्छते। पचत्यपि चैत्रे न पचती"ति प्रयोगातिप्रसङ्गावारणात् ।

## नैय्यायिकैः कृतं कार्यकारणभावखण्डनम्

अत्र कार्यकारणभावः – सुबर्थलिङ्गसङ्ख्याव्यतिरिक्तप्रातिपदिकार्थ-व्यतिरिक्तप्रकारकशाब्दबोधं प्रति भावनानिष्ठविशेष्यतासम्बन्धेन लिङ्गानन-न्वयिपदजन्योपस्थितिः कारणमिति । अयमर्थः – सुबर्थलिङ्गसङ्ख्याव्यतिरि-क्तः प्रातिपदिकार्थव्यतिरिक्तश्च योऽर्थः तत्प्रकारकः यः शब्दबोधः तं प्रति भावनानिष्ठा या विशेष्यता तद्रूपसम्बन्धेन लिङ्गानन्वयि यत्पदं तज्जन्या या उपिस्थितिः सा कारणम् । यथा "चैत्रः पचति" इत्यत्र ।

अयं च कार्यकारणभावः न युक्तः । यतः परमते स्थलभेदेन मुख्यविशे-ष्यतया भानं न एकस्यैव भवितुमर्हति । यथा – "चक्षुर्जानाति" इत्यत्र आश्रयत्वमाख्यातार्थः, 'घटो नश्यति' इत्यत्र प्रतियोगित्वमाख्यातार्थः, "चैत्रः पचति" "चैत्रेण पच्यते" इत्यत्र कृतिः आख्यातार्थः, "चैत्रः न पचती"त्यत्र कृत्यभावः इति रीत्या एषु स्थलेषु एतदर्थस्यैव मुख्यविशेष्यतया भानम् । एतत्साधारणं च भावनात्वमनुगतं निर्वक्तुं न शक्यम् । न च भावनात्वं च सङ्ख्याकालकारकातिरिक्त-अख्यातार्थत्वम् इति वाच्यम् । आख्याततत्वस्य अननुगतत्वात् । अपि च शक्तिलक्षणान्यतरसम्बन्धेन आख्यातपदप्रतिपाद्य-त्वम् आख्याततत्वम् इत्यपि न युज्यते । लक्षणघटक-आख्याततत्वस्याननुगत-त्वात् । नापि भावनात्वम् अखण्डो धर्मः । अखण्डधर्म- साधकीभूतायाः "इयं भावना" इत्यनुगतप्रतीतेरभावात् । नापि भावनापदव्यपदेश्यत्वमेव भा-वनात्वम् । विनिगमनाविरहात् । अर्थात् एतत्सम्बन्धेन भावनापदवत्वं वा, पुरुषान्तरीयसङ्केतसम्बन्धेन पदान्तरवत्वं वा? इति निर्णेतुमशक्यत्वादिति ।

एतावता प्रबन्धेनापि तत्तस्थलभेदेन बोधनिर्वाहाय अनन्ताः कार्यकारण-भावाः वक्तव्या एव । यथा तत्तत्पदार्थस्य भावनायां सम्बन्धभेदेनैव अन्वयो वक्तव्यः । तदित्थम् – "चैत्रः पचती"त्यत्र लट्प्रत्ययार्थवर्तमानकालस्य आधेयतासम्बन्धेन, 'रथो नश्यति' इत्यत्र स्ववृत्त्युत्पत्तिकनाशनिरूपितत्वस-म्बन्धेनान्वयस्वीकारात् । एवं तत्तत्संसर्गकशाब्दबोधं प्रति तत्तत्समभिव्याहा-रज्ञानं कारणम् इति रीत्या । अतः नायं कार्यकारणभावो युज्यते ।

## नैयायिकैः स्वमतानङ्गीकर्तुः प्रयोगानुपपत्तिप्रदर्शनम्

इदानीं नैयायिकैः प्रथमान्तार्थमुख्यविशेष्यकबोधानङ्गीकर्तॄणां मते दोषः प्रदर्श्यते । यथा "चैत्र एव पचति" इत्यत्र विवक्षितः बोधोऽयम् – "पाका--नुकूलकृत्याश्रयो चैत्रः चैत्रान्यः पाकानुकूलकृत्यभाववान्" इति । वाक्यभे-दश्चात्र इष्टः । तत्र कारणं मुख्यविशेष्यभेदः । चैत्रः चैत्रान्यश्च प्रकृतविषयः । भावनामुख्यविशेष्यकबोधस्वीकारे "चैत्र एव पचति" इस्मात् अयं बोधः जायते । चैत्रवृत्तिः चैत्रान्यवृत्तिश्च या भावना सा एककर्तृका । अस्मिन् वाक्ये दोषाभावेऽपि वाक्यान्तरे दोषः लगति । तद्यथा "चैत्रमैत्रौ पचतः" इति यत्र चैत्रः मैत्रश्च पचन्तौ दृश्येते, तत्र चैत्र एव पचतीति प्रयोगापत्तिः । कारणमिदम् –भावना च व्यक्तिभेदेन भिद्यते । प्रकृते भावना चैत्रनिष्ठा, मैत्र-निष्ठा च । चैत्रमैत्रौ च भिन्नौ । तद्भेदात् तन्निष्ठभावनाभेदः । ततश्च "चैत्र-मैत्रौ पचतः" इत्यत्र यद्यपि मैत्रः पचति अर्थात् मैत्रनिष्ठा भावना । अथापि सा न चैत्रनिष्ठा । भिन्नत्वात् । एवञ्च प्रकृतप्रयोगेऽपि पाकानुकूलकृतौ चैत्र-वृत्तित्वं चैत्रान्यावृत्तित्वं च अबाधितमिति अत्र चैत्र एव पचतीति प्रयोगा-पत्तिः । अतः नैय्यायिकविवक्षित एव बोधः ।

अपि च प्रयोगान्तरे "चैत्रः पचति" इति स्थले प्रश्नवाक्यं चैत्रः कीदृशः?

इति । अत्र विचारः - चैत्रः कीदृशः? इति प्रश्नस्य किमाकारकमुत्तरं भवेत्? इत्युक्ते दृष्टान्तमुखेनोपपादनं क्रियते । यथा कस्मात् घटः जायते? इति प्रश्ने उत्तरं दीयते – दण्डात् घटो जायत इति । न तु 'दण्डजन्यः घटः' इति । तत्र कारणमिदम् – प्रश्नवाक्येन यद्धर्मावच्छिन्ने यद्धर्मप्रकारकः यत्संसर्गकश्च बोधः जायते, तादृश एव तद्धर्मावच्छिन्ने तद्धर्मप्रकारकः तत्संसर्गकश्च बोधः उत्तर-वाक्याद्भवेत् । प्रकृते घटत्वावच्छिन्ने घटे जिज्ञासितधर्मावच्छिन्नजन्यत्वप्रका-रकः बोधः प्रश्नवाक्येन जायते । उत्तरवाक्येऽपि तादृश एव बोधः तत्प्रश्नस्यो-त्तरं भवेत् । अर्थात् घटः किन्निरूपितजन्यत्ववान् ? इति प्रश्नस्य इदमुत्तरम् – "दण्डत्वावच्छिन्ननिरूपितजन्यत्ववान् घटः" इति । अत्र अयं बोधः – दण्डत्वावच्छिन्ननिरूपितजन्यत्वप्रकारकः न तु दण्डजन्यत्वावच्छिन्नप्रका-रकः । अर्थात् दण्डाद् घटः इत्येव तत्प्रश्नस्य अनुगुणम् उत्तरम् । न तु दण्ड-जन्यः इति । तेन दण्डजन्यत्वावच्छिन्नप्रकारक- अभेदसंसर्गकबोधजननेऽपि विवक्षिततद्भिन्नसम्बन्धप्रकारकबोध-अजननात् ।

यथोक्तम् –

**जिज्ञासितपदार्थस्य संसर्गो येन गम्यते ।**
**तदुत्तरमितिप्रोक्तम् अन्यदाभासशब्दितम् ॥**

अस्यायमर्थः – चैत्रः कीदृशः? इति प्रश्नवाक्यस्य "चैत्रः पचती"ति न उत्तरवाक्यं भवितुमर्हति । अपि तु "चैत्रः पाचकः" इत्येव । तत्र कारणमि-दम् – प्रश्नवाक्याद् यादृशः बोधः अनुभूयते तादृश एव उत्तरवाक्येनापि भाव्यम् । प्रकृते एव चैत्रः कीदृश? इति प्रश्नवाक्यात् चैत्रनिष्ठविशेष्यतानिरू-पकः जिज्ञासितधर्मनिष्ठावच्छेदकतानिरूपितअवच्छेद्यताश्रयप्रकारकः अभेद-संसर्गकः बोधः जायते । अतः तादृश एव बोधः चैत्रः पाचकः इत्यस्माद्भवती-ति अस्यैव उत्तरवाक्यत्वम् । अत्र च बोधः अभेदसंसर्गकः कृत्यवच्छिन्न-

प्रकारकश्च । "चैत्रः पचती"ति वाक्यात् तु आख्यातार्थकृतिप्रकारकः समवायसंसर्गकश्च बोधः ।

एवं यदि नाङ्गीक्रियते तर्हि भावनाविशेष्यकबोधस्वीकारेऽपि कीदृशी कृतिः? इति प्रश्नकरणे "चैत्रः पचति" इति उत्तरमपि दातुं शक्यमिति स्यात् । पूर्वोक्तनियमानङ्गीकारात् । अतः तत्संसर्गकः तत्प्रकारकश्च तद्विशेष्यकश्च यः बोधः प्रश्नवाक्याज्जातः तादृश एव बोधः उत्तरेणापि वाक्येन अपेक्ष्यते । अत्रानुपपत्ति- प्रदर्शनम् — कीदृशी कृतिः? इति प्रश्नस्य न "चैत्रः पचति" इत्युत्तरं दीयते । कुतः? इत्यत्रेदमस्ति कारणम् – प्रश्नवाक्ये या कृतिः वर्तते सा स्त्रीलिङ्गविशिष्टा । उत्तरवाक्ये या कृतिः बोध्यमाना सा न स्त्रीलिङ्गविशिष्टा । आख्यातार्थकृतेर्लिङ्गानन्वयित्वात् । परन्त्विदमपि अनुपपन्नम् । कृतौ स्त्रीत्वान्वययोग्यताभावात् । न च स्त्रीत्वं नार्थनिष्ठम् । शाब्दिकरीत्या शब्दनिष्ठमिति वाच्यम् । तथा विवक्षितेऽपि प्रश्नवाक्ये लिङ्गस्य अविवक्षितत्वेन उत्तरवाक्येऽपि तथा इति वक्तुं शक्यत्वात् । अतः कीदृशी कृतिः? इति प्रश्नस्य "चैत्रः पचति" इति प्रयोगोऽपि उत्तररूपो भवेत् । अतः पूर्वोक्तनियमः अङ्गीकार्य एव ।

एवं चैत्रतदन्यौ किं कुरुतः? इत्यत्रापि चैत्र एव पचति इति उत्तरं दीयेताम् । अतः सतिसम्भवे यत्र यत्र प्रथमान्तं पदमस्ति । तत्र सर्वत्र प्रथमान्तार्थमुख्यविशेष्यक एव बोधः वर्णनीयः ।

## अयि भोः नैय्यायिकाः! कथं पश्य मृगो धावति

प्रथमान्तार्थमुख्यविशेष्यकबोधाङ्गीकारेऽयं दोषः नैय्यायिकानां मते आपद्येत । तथाहि –'पश्य मृगो धावति' इति च एकं वाक्यं कथं स्यात्? अपि च दर्शनकर्म भवति मृगः तत्पदात्कुतो न द्वितीया? इति आक्षेपद्वयम् ।

समाधानम् – किं नाम एकवाक्यत्वम्? इति विचार्यमाणे उत्तरं तावत् – एकमुख्यविशेष्यकबोधजनकत्वमेव एकवाक्यत्वम् । तच्च प्रकृते सम्भवत्येव । तथाहि –प्रकृते हि वाक्यद्वयम् । तत्रावान्तरवाक्येन "मृगो धावति" इत्यनेन धावनविशिष्टो मृगः इति बोधः जायते । तस्य धावनविशिष्टमृगस्य दृश् धात्वर्थे दर्शने कर्मतया अन्वयः । एवञ्च धावनविशिष्टमृगकर्मकं दर्शनम् इति बोधः । अस्य च आख्यातार्थे आश्रयत्वे अन्वयः । एवञ्च धावनविशिष्टमृगकर्मकदर्शनाश्रयः इति बोधः । "त्वमि"ति पदं च अध्याह्रियते । तदर्थे च धावनविशिष्टमृगकर्मकदर्शनाश्रयरूपपदार्थस्य अन्वयः । एवञ्च "धावनविशिष्टमृगकर्मकदर्शनाश्रयाभिन्नः त्वम्पदार्थः" इति त्वंपदार्थरूपैकमुख्यविशेष्यकबोधजनकत्वम् अस्य वाक्यस्य ।

अत्र अन्वयकथनसन्दर्भे प्रश्नः । यदा धावनविशिष्टमृगस्य कर्मतासम्बन्धेन दर्शने अन्वयः इति उच्यते तदा व्युत्पत्तिविरोधः । "नामार्थयोः भेदेनान्वयः अव्युत्पन्नः" इत्यनुरोधात् । भेदेन अन्वयः साक्षात् न वक्तव्यः इति । न चात्र दोषः । यतः साक्षाद्भेदेनान्वयः यद्यपि अव्युत्पन्नः इति तु सत्यम् । कयोरिति विचारे नामार्थयोः इति तु उत्तरम् । अत्र च धावनविशिष्टमृगः न नामार्थः । अपि तु "धावति मृगः" इति अवान्तरवाक्यबोध्यः वाक्यार्थः । वाक्यार्थस्य भेदसम्बन्धेन साक्षाद्धात्वर्थेऽन्वये नास्याः व्युत्पत्तेर्विरोधः ।

अथापि अतिप्रसङ्गः । 'नीलो घटो जानाति' इति प्रयोगः स्यादिति । वस्तुतः अयं प्रयोगः "नीलं घटं जानाती"ति । यतः अत्र ज्ञाने कर्म भवति नीलरूपविशिष्टः घटः । एवञ्च यदा वक्तुः नीलरूपविशिष्टघटस्य ज्ञानकर्मत्वं प्रतिपादयितुमिष्टम्, तदा "नीलो घटः जानाती"ति प्रयोगः स्यादेव ।

न च नीलविशिष्टघटस्य ज्ञानकर्मत्वे "कर्मणि द्वितीया" इति सूत्रेण द्वितीया स्यादिति वाच्यम् । "पश्य मृगो धावति" इत्यत्रापि द्वितीयाप्रसङ्गात्

अत्रोच्यते – अस्ति च तत्र "कर्मणि द्वितीया" इत्यनुशासनाप्रवृत्तौ किञ्चिन्निमित्तम् । तथाहि –तत्र कर्म भवति न मृगमात्रम् । अपि तु धावन-विशिष्टः मृगः । स च वाक्यार्थः अवान्तरवाक्यबोध्यः । अतः न कारकत्वं तस्यास्तीति कुतो कर्मणि द्वितीया इत्यनेन द्वितीया? नैव भवतीति तात्पर्यम् ।

तर्ह्यत्रापि तुल्यन्यायेन नीलविशिष्टो घटः इत्यस्यापि अवान्तरवाक्यार्थ-रूपत्वेन अवान्तरवाक्यबोध्यत्वात् । नात्र कारकत्वमिति कथं कर्मणि द्वितीया इत्यनेन द्वितीया । अत्र यः प्रसङ्गः स तत्रापि समानः इति नोभयत्रा-पि दोषः ।

यदा तु वक्तुः नीलविशिष्टघटस्य ज्ञानकर्मत्वमस्तीति विवक्षा तदा नीलो घटो जानातीति प्रयोगः इष्ट एव । तर्हि "नीलं घटं जानाती"ति वाक्यस्य का गतिः? इत्यत्रेदमुत्तरम् –तत्र "विशेष्ये विशेषणं तत्रापि विशेषणान्तरम्" इति रीत्यैव अन्वयबोधः स्वीक्रियते । यथा "वह्निव्याप्यधूमवान् पर्वतः" इत्यत्र बोधः विशेष्ये विशेषणम् इति रीत्या भवति तथा । समन्वयः – विशेष्ये पर्वते विशेषणं धूमः । तत्र विशेषणं व्याप्तिः । तत्र विशेषणं वह्निः इति रीत्या । तद्वत् प्रकृतेऽपि ।

अयं चापरो विशेषः – यदा हि "नीलं घटं जानाती"ति वाक्यात् नील-विशिष्टघटकर्मकज्ञानशाब्दबोधः इष्टः तदा कथम्? इत्युक्ते, एवम् – वाक्यस्थं घटपदं नीलविशिष्टघटपरम् । अर्थात् घटपदस्य नीलविशिष्टघटे लक्षणा । नीलपदं च तात्पर्यग्राहकम् । इदानीं द्वितीयाऽपि उपपन्ना । यतः नीलविशि-ष्टघटबोधकं भवति नीलपदम्, न तु वाक्यार्थः नीलविशिष्टघटरूपः इत्येवं "नीलो घटो जानाति" इति प्रयोगः अपि साधु । "नीलं घटं जानाति" इति प्रयोगोऽपि साधु ।

अपि च “धावति मृगः” इत्यवान्तरवाक्यबोध्यः यः धावनविशिष्टमृगरूपः वाक्यार्थः तस्य कर्मतासम्बन्धे- नान्यत्रान्वये यथा 'कर्मणि द्वितीया' इति न द्वितीयापत्तिः तथा बहुषु स्थलेषु एवंविधेषु द्वितीयापत्तेः अभावः वर्तत इति बहुप्रयोजनम् । एते हि प्रयोगाः – 'जानामि सीता जनकप्रसूता' 'श्रुत्वा ममैतन्माहात्म्यम् तथा चोत्पत्तयः शुभाः' 'देवाकर्णय सङ्ग्रामे चापेनासादिताः शराः' ।

एवञ्च 'पश्य मृगो धावति' इत्यत्र एकवाक्यत्वं (वाक्यैकवाक्यत्वम् इति यावत्) द्वितीयापत्तिवारणं च नैय्यायिकैः समर्थितम् ।

## “पश्य मृगो धावति” इत्यत्र [1]न्यायकौस्तुभकाराणामाशयः

“पश्य मृगो धावती”त्यत्र प्रथमं द्वेधा नैयायिकमतेन बोधनिष्कर्षः स्फुटीकृतः ।

१) “धावति मृगः” इति वाक्यार्थः धावनानुकूलकृतिविशिष्टमृगः । तस्य कर्मतासम्बन्धेन विषयत्वपर्यवसितेन दर्शनक्रियायामन्वयः । तस्याश्च अध्याहृतत्वम्पदार्थे इति धावनानुकूलकृतिमन्मृगकर्मकदर्शनाश्रयस्त्वमिति प्रथमान्तार्थमुख्यविशेष्यकबोधः । अतः एकवाक्यता निर्वहति । केवलनामार्थस्य भेदसम्बन्धेन धात्वर्थे अन्वय एव व्युत्पत्तिविरुद्धः इति वाक्यार्थस्य तथान्वये न किमपि बाधकम् । मृगपदं न कर्मबोधकम् । अपि तु वाक्यमेव । तस्य प्रातिपदिकसञ्ज्ञा नास्तीति न तदुत्तरं द्वितीयाप्रसङ्गः । तथा च वाक्यार्थस्य कर्मत्वात् सामञ्जस्यम् इत्येकः पक्षः ।

---

(1) महादेवपण्डितैः विरचित न्यायकौस्तुभः (शब्दपरिच्छेदः) - तञ्जावूर् महाराजा शरभोजी सरस्वतीमहल् ग्रन्थालयेन मुद्रितम् (१९८२)

२) दृशिधातोः धावनानुकूलकृतिमन्मृगकर्मकदर्शने, मृगकर्तृकोत्कटधावनदर्शने वा लक्षणा । मृगो धावतीति वाक्यं लक्षणातात्पर्यग्राहकम् । अयं द्वितीयः पक्षः ।

निरुक्तस्थले इतिपदमध्याह्रियते । इतिपदस्य निपातस्य कर्मत्वमर्थः । धावनकृत्यन्वितस्य मृगस्य नामार्थस्यापि भेदसम्बन्धेन इति-निपातार्थकर्मत्वे, तस्य च "पश्ये"त्यत्र धात्वर्थदर्शने साक्षात् भेदेनान्वये न कोऽपि व्युत्पत्तिविरोधः । निपातातिरिक्तनामार्थयोः, निपातातिरिक्तनामार्थधात्वर्थयोश्चैव साक्षात् भेदेनान्वयस्य व्युत्पत्तिविरुद्धत्वात् ।

अथवा, अध्याहृत इतिपदस्यैव लक्षणया धावनकर्तृमृगः बोध्यः । इति-पदोत्तरलुप्तद्वितीयार्थः कर्मत्वं धात्वर्थदर्शनान्वयि । "मृगो धावती"ति वाक्यम् इति-पदस्य लक्षणातात्पर्यग्राहकम्, इति मतद्वयं निरूप्य, सर्वत्रैव इति-पदाध्याहारेण बोधसम्भवात् नामार्थधात्वर्थयोः सर्वत्र साक्षात् भेदेनान्वयप्रसङ्गेन दूषयमासुः ।

अत्र ग्रन्थकर्तुरभिप्रायोऽयम् – दृशिधातोः वाक्यार्थकर्मकदर्शने लक्षणामाश्रित्य मृगो धावतीति वाक्यस्य तात्पर्यग्राहकत्वपक्षः, अध्याहृत इतिपदस्य वाक्यार्थलक्षणायां "मृगो धावती"ति वाक्यस्य तात्पर्यग्राहकत्वपक्षस्य न स्वारसिकः । केवलं तात्पर्यग्राहकतायाः व्यर्थत्वसमशीलत्वात् । एवम्, इति-शब्दाध्याहारवादिमतदूषणमपि न समञ्जसम् । तस्मात् वाक्यार्थस्य कर्मतयान्वयपक्षः समीचीनः । तथा, इति-पदाध्याहारे निपातस्य इतिपदस्य नामार्थान्वितकर्मत्वार्थकतापक्षोऽपि साधुः । निपातेन इतिना कर्मत्वस्याभिधानात् न मृगपदात् द्वितीयाप्रसङ्गः ।

अस्मिन् विषये ग्रन्थकर्तुरभिप्रायं व्याख्यात्रा एवं स्पष्टीकृतम् – मृगस्य कर्मतासम्बन्धेन दृशिधात्वर्थेन्वये मृगपदात् न द्वितीयाप्रसङ्गः ।

प्रातिपदिकार्थविशेष्यतया कर्मत्वस्याविवक्षणात् । अनभिहिते "कर्मणि द्वितीया" इत्यनुशासनस्य प्रातिपदिकार्थविशेष्यतया कर्मत्वविवक्षायां द्वितीया भवति इति निष्कृष्टार्थ- वर्णनात् ।

एवञ्च सर्वत्र नैय्यायिकमते प्रथमान्तार्थमुख्यविशेष्यक एव वर्णनीयः इति नास्ति नियमः इति न दोषः । तथाहि कौस्तुभपङ्क्तिः – "वस्तुतस्तु नैय्यायिक-मते सर्वत्र प्रथमान्तार्थविशेष्यक एव बोधः इति न नियमः कैरपि अभियुक्तैः तथा अलिखनात् , अनिर्वाहाच्च । किन्तु यथासम्भवं तत्तद्विशेष्यकः ॥"

यथासम्भवं तत्तद्विशेष्यकबोधानुपगमे अनुपपत्तिश्च दर्शिता – "ब्राह्मो विवाह आहूय यत् कन्या दीयते स्वयम्" - इत्यत्र आह्वानपूर्वकं स्वयं कन्या-दानं ब्रह्मो विवाहः इत्यर्थलाभो न स्यादिति ।

एवञ्च प्रकृते "पश्य मृगो धावती"त्यत्र धावनक्रियायाः विशेष्यतया भानात् "मृगो धावती"ति वाक्यार्थभूतायाः मृगकर्तृकधावनक्रियायाः दर्शन-क्रियायामन्वयस्वीकारात् नानुपपत्तिः ।

## "पश्य मृगो धावती"त्यत्र गूढार्थतत्वालोककाराणामाशयः

"पश्य मृगो धावति" इत्यत्र मृगविशेष्यकबोधस्वीकारे "धावन्तं मृगं पश्य" इत्येव प्रयोगः स्यात् । यतः मृगनिष्ठदर्शनकर्मत्वम् अन्यानभिहितम् इति । परं क्रियामुख्यविशेष्यकबोधाभ्युपगमे तस्याः एव अर्थात् तादृशधावन-क्रियाया एव दर्शनकर्मत्वेन धावनक्रियाबोधकधातुपदात् द्वितीयायाः असम्भ-वात् इति वैय्याकरणाः नैय्यायिकानाक्षिपन्ति ।

समाधानम् – अत्र गूढार्थतत्वालोके बच्चा झा महोदयेन - परेषामुद्भावनं न दूषणायालम् । प्रथमान्तार्थस्य तस्य मुख्यविशेष्यत्वासम्भवेन तत्र त्यागे

क्षत्यभावात् । न हि प्रथमान्तार्थमात्रस्य मुख्यविशेष्यत्वं कैश्चिदपि नैय्यायिकदेशीयैरपि प्रतिज्ञातम् । नञ्समभिव्याहारस्थले विशेषणविभक्तिस्थले च तदनभ्युपगमात् । तद्भङ्गमात्रफलकस्य उक्तस्थलान्वेषणक्लेशस्य विफलतैव । एवं "पश्य मृगो धावति" इत्यत्र अध्याहृतत्वमिति प्रथमान्तार्थस्य च भवत्येव विशेष्यत्वम् ।

यदा इति-पदाध्याहारः कार्यः, तथा सति तेनैव निपातेनाभिधानात् प्रथमोपपत्तिः । प्रथमान्तविशेष्यत्वानुभवाविरोधश्च" इति । अत्रानेन ग्रन्थकारेण न्यायकौस्तुभकाराणामाशय एव वर्णितः इति ज्ञेयः ।

## क्वचित्स्थलविशेषे नामार्थधात्वर्थयोः साक्षात् भेदेनान्वयव्युत्पत्तेः सङ्कोचः

अयं नियमः वर्तते – 'नामार्थधात्वर्थयोः साक्षात् भेदसम्बन्धेनान्वयः न करणीयः' इति । अन्यथा "तण्डुलः पचति" इति प्रयोगापत्तिः । न चेदम् अनिष्टम् । "तण्डुलः पचति" इत्यर्थस्यैव बाधितत्वात् । सत्यम् । अत्राभिप्रायान्तरमस्ति । यत्र तण्डुलस्य कर्मतासम्बन्धेन पाके अन्वयः इति तात्पर्येण प्रयुज्यते तत्र "तण्डुलः पचति" इति वाक्यबोध्यस्यार्थस्य न बाधः । तत्र "तण्डुलः पचति" इति प्रयोगः इष्टः । नन्वथाप्ययं प्रयोगः अनिष्टः भवितुमर्हति । कर्मतासम्बन्धेन तण्डुलस्यान्वयात् । तण्डुलस्य कर्मत्वेन कर्मणि द्वितीया इति द्वितीयायां "तण्डुलं पचति" इति स्यात्, न तु "तण्डुलः पचति" इति ।

अत्र परिहारः — 'अनभिहिते कर्मणि द्वितीया' इत्यस्यायमर्थः – प्रातिपदिकार्थविशेष्यतया यत्र कर्मत्वं विवक्षते तत्रैवानेन सूत्रेण द्वितीया । न त्वितरत्र । प्रकृते न प्रातिपदिकार्थविशेष्यतया कर्मत्वभानम् । अपि तु संस-

र्गतया कर्मत्वस्य भानम् । अतः तण्डुलस्य कर्मत्वे सत्यपि द्वितीयायां प्रयोगो नास्ति । प्रथमान्त एव "तण्डुलः पचति" इति प्रयुज्यते ।

एवञ्च अस्य प्रयोगस्य वारणं कथम्? अत्रोच्यते – नामार्थधात्वर्थयोर्भेदे-नान्वयः साक्षाद्भेदेनान्वयः अव्युत्पन्नः । प्रकृते च नामार्थः तण्डुलरूपार्थः धात्वर्थः पाकः, तस्मिन् साक्षाद्भेदेन अर्थात् कर्मतासम्बन्धेन अन्वयस्य अयोग्यता इति न "तण्डुलः पचति" इति कर्मतासम्बन्धेन तण्डुलस्यान्वयतात्पर्येण प्रयोगः ।

एवं तर्हि "पश्य मृगो धावति" इत्यत्र नामार्थः कः? इति विचारे मृगः इति वक्तव्यम् । न च धावनविशिष्ट -मृगस्यैव धात्वर्थे दर्शने कर्मतापरपर्याय-विषयतासम्बन्धेनान्वयेन नामार्थत्वाभावात् कथं पूर्वोक्तव्युत्पत्तिविरोधः इति वाच्यम् । अयमभिप्रायः – नात्र वाक्यैकवाक्यतयान्वयः नैय्यायिकैः वक्तुं शक्यः । तथा सति पूर्वोक्तव्युत्पत्त्यविरोधः वक्तुं शक्यम् । अपि तु पदैकवाक्यतयान्वयः नैय्यायिकैरपि स्वीकार्यः । महाभाष्यसिद्धत्वात् पदैकवाक्यतान्वयस्य । पदैकवाक्यतान्वयो नाम एवम् – धावतिपदार्थान्वितः मृगः, तस्य च कर्मतासम्बन्धेन दर्शनक्रियायामन्वयः । तस्याश्च अध्याहृतत्वंपदार्थेन्वयः । एवञ्च बोधः – धावनेन विशिष्टः यः मृगः तत्कर्मकं यद्दर्शनं तदाश्रयः त्वमिति । एवं पदैकवाक्यतास्वीकारे नामार्थः भवति मृगः तस्य धात्वर्थे दर्शने कर्मतासम्बन्धेन साक्षाद्भेदसम्बन्धेनान्वये पूर्वोक्तव्युत्पत्तिविरोधः अस्त्येव ।

अत्र परिहारः – नैतावान् नियमः । परिष्क्रियते चायम् । तथाहि – आख्यातार्थाविशेषितनामार्थ- धात्वर्थयोरेव साक्षाद्भेदेनानन्वयः । एवं सति स्थलद्वये न दोषः । इष्टमपि सङ्गृह्णाति अनिष्टं परित्यजति । तदित्थम् — "तण्डुलः पचति" इति वाक्यप्रयोगापत्तिर्नास्ति; यतः धात्वर्थे पाके साक्षाद्भे-

दसम्बन्धेन कर्मतासम्बन्धेन अन्वितः तण्डुलरूपः पदार्थः न आख्यातार्थविशेषितः इति तन्नियमविरोधेन तथा अप्रयोगः । प्रकृते तु "पश्य मृगो धावति" इत्यत्र यः मृगरूपः नामार्थः साक्षाद्भेदसम्बन्धेन कर्मतासम्बन्धेन दर्शने धात्वर्थे अन्वीयते स च आख्यातार्थविशेषितः । तथाहि –आख्यातार्थः धावनकर्तृत्वम् । तदन्वितो भवति मृगः । एवञ्च आख्याताविशेषितनामार्थधात्वर्थयोरेव साक्षाद्भेदेनानन्वयस्वीकारात्, प्रकृते च तदभावात् "पश्य मृगो धावति" इति प्रयोगः सूपपन्नः ।

अथापि द्वितीयापत्तिः कुतो न ? इत्यत्र पूर्वोक्तमेव समाधानम् । प्रातिपदिकार्थविशेष्यतया यत्र कर्मत्वं तत्रैव द्वितीयानुशासनम् । न त्वन्यप्रकारत्वे । प्रकृते यत्कर्मत्वं मृगवृत्ति तत् संसर्गतया एव भासत इति नात्र कर्मणि द्वितीया इत्यनेन द्वितीया । एतत्सर्वं कृष्णम्भट्टीये, व्युत्पत्तिवादे लकारार्थविचारे स्पष्टम् ।

एवं नैय्यायिकैः "पश्य मृगो धावति" इत्यत्र पदैकवाक्यता वाक्यैकवाक्यता इति द्वयमपि स्वीकृतम् ।

## कथं तर्हि "पश्य लक्ष्मण पम्पायां बकः परमधार्मिकः"

अयमाशयः – अत्र "नामार्थधात्वर्थयोः साक्षाद्भेदेनान्वयः अव्युत्पन्नः" इति नियमविरोधः । तथाहि – नामार्थः बकः । धात्वर्थं च दर्शनम् । तस्मिन् बकस्य साक्षाद्भेदेन कर्मतासम्बन्धेन अन्वयात् ।

अत्र परिहारः – न चायं नियमः परिष्कृतः । तर्हि किमस्ति परिष्कृतं रूपम् ? तदिदम् –आख्यातार्थाविशेषितनामार्थधात्वर्थयोः साक्षाद्भेदेनान्वयः अव्युत्पन्नः इति । सत्यम् । अथापि किमत्र आख्यातपदं दृश्यते । नास्त्येव । अतः तन्निबन्धनम् अदोषत्वं न युक्तम् ।

अत्रोच्यते – "असति बाधके अस्तिभवत्योः सर्वत्राध्याहारः" "अस्तिर्भ-वन्तीपरः प्रथमपुरुषः अप्रयुज्यमानोप्यस्ति" इत्याद्यनुशासनबलात् अस्तिपद-मत्र अध्याह्रियते । एवञ्च यः नामार्थः बकः सः, धात्वर्थे दर्शने साक्षात्सम्ब-न्धेन कर्मतासम्बन्धेन अन्वीयते । स च आख्यातार्थविशेषितः। आख्या-तार्थश्च सत्ताविशिष्टकर्तृत्वम् । तदाश्रयो बकः इति आख्यातार्थाविशेषितना-मार्थधात्वर्थयोरेव साक्षाद्भेदेनान्वयस्य अस्वीकारात् । नात्र तद्विरोधः ।

अथवा —— नास्ति अस्तिपदाध्याहारः आवश्यकः । तथाहि – "नामार्थधात्वर्थयोः ...." इति व्युत्पत्तिरेव न कल्पयितुं योग्या । न च "तण्डुलः पचति" इत्यत्र दोषः । प्रकारान्तरेण दोषवारणसम्भवात् । प्रकारान्तरं चेदम् – यदि जायमानः बोधः प्रसिद्धः तदनुगुणतया व्युत्पत्तिः कल्पनीयः भवेत् । न चात्र पाकविशेष्यककर्मतासंसर्गकतण्डुलप्रकारकशाब्दबोधः प्रसिद्धः । अतः नेयं व्युत्पत्तिः । अत एव मृगस्य वा धावनविशिष्टमृगस्य वा कर्मतासम्बन्धेन दर्शने अन्वये न कापि क्षतिः । अत एवात्र बकस्य दर्शने कर्मतासम्बन्धेनान्वयेऽपि न क्षतिः ।

## तत्तद्दार्शनिकैरपि व्युत्पत्तिवैचित्र्यस्वीकारः अङ्गीकर्तव्य एव

यद्यपि नैय्यायिकैः महाभाष्यसिद्धा पदवाक्यता तु उपपादिता । परन्तु एतावतापि न धावनक्रियायाः दर्शनक्रियाकर्मत्वमुपपादितम् इत्याक्षेपे तदुपपा-दनमपि तैः स्वग्रन्थे कृतम् । तथाहि – मृगरूपप्रथमान्तार्थविशेषिता भवति आख्यातार्थधावनानुकूला कृतिः । तस्याश्च दर्शनक्रियायां कर्मतयाऽन्वयः इति रीत्या पदैकवाक्यत्वं दर्शनकर्मत्वं च सिद्धम् । अयमाशयः – "पश्य मृगो धावति" इति वाक्यप्रयोक्तुः न केवलं मृगदर्शनं कार्यमिति प्रतिपादयितुमिष्टम् । अपि तु मुख्यतः मृगनिष्ठं यद्धावनं तद्दर्शनप्रतिपादन एव तात्पर्यम् ।

एवञ्च अयं नैय्यायिकमतसमयः —— प्रायः प्रथमान्तकर्तृवाचकपदसमभि-व्याहारे प्रथमान्तार्थमुख्यविशेष्यक एव बोधः । क्वचिदन्यथाऽपि – यथा प्रकृते "पश्य मृगो धावति" इत्यत्र प्रथमान्तार्थस्यापि विशेषणतया अन्वयः आख्यातार्थे । अत्र हेतुः व्युत्पत्तिवैचित्र्यम् ।

तथा च "पश्य मृगो धावति" इत्यत्र बोधः – "मृगनिष्ठधावनकृतिकर्मकदर्शनाश्रयः त्वम्" इति । अत्र मृगस्याधेयतासम्बन्धेन आख्यातार्थे धावनान्वितकृतौ अन्वयः । तस्याश्च कर्मतासम्बन्धेन दर्शनक्रियायां तदन्वित-आख्यातार्थाश्रयत्वस्य अध्याहृतत्वंपदार्थेऽन्वयः ।

न ह्येतत्स्थले नैय्यायिकेन केवलेन व्युत्पत्तिवैचित्र्यं स्वीकृतम् । अपि तु वैय्याकरणैर्मीमांसकैश्च स्वीकृतम् । वैय्याकरणाः धात्वर्थस्य धात्वन्तरार्थे अन्वयार्थं व्युत्पत्त्यन्तरं स्वीकुर्वन्ति । मीमांसकाश्च धावनभावनायाः दर्शन-भावनायामन्वयार्थं व्युत्पत्त्यन्तरम् ।

## "पश्य मृगो धावति" इत्यत्र नैय्यायिकमतसङ्ग्रहः

अत्र स्थले त्वं पदार्थः एक एवेति एकमुख्यविशेष्यकबोधजनकत्वमस्य वाक्यस्य । अथ च आख्यातार्थस्य धात्वर्थेऽन्वयात् पदैकवाक्यता अथवा धावनविशिष्टमृगरूपार्थस्य वाक्यार्थस्य दर्शने कर्मतासम्बन्धेन साक्षादन्वयात् वाक्यैकवाक्यता । उभयथापि नामार्थधात्वर्थयोः इति व्युत्पत्त्यविरोधः । अस्त्यत्र कारणविशेषः । पूर्वोक्तरीत्या नैव सा अङ्गीक्रियते । अङ्गीकृतायामपि पदैकवाक्यतापक्षे आख्यातार्थस्यैव धात्वर्थेऽन्वयोपगमेन न तद्व्युत्पत्ति-विरोधः । वाक्यैकवाक्यता पक्षे तु स्पष्टं न तद्विरोधः । एवमेव कर्म-बोधकाख्यातोत्तरं द्वितीयायाः शङ्कैव नास्ति । अपि च धावनविशिष्टकृतेः दर्शनकर्मत्वम् अवगाहमानोयं बोधः विशेषणीभूतधावनस्यैव दर्शनकर्मत्वे

पर्यवस्यति । तदत्र न्यायः – "सविशेषणे हि विधिनिषेधौ विशेषणमुपसङ्क्रामतः सति विशेष्यबाधे" यथा न जीर्णमलवद्वासाः स्नातकः स्यात् । प्रकृते कृतेः दर्शनकर्मत्वान्वये योग्यताभावात् । अर्थात् तस्याः अतीन्द्रियत्वात् दर्शन-कर्मत्वं विशेषणीभूतं धावनमुपसङ्क्रामति ।

## "सविशेषणे हि विधिनिषेधौ ....." इति नियमः प्रकृतस्थले वैय्याकरणैरपि स्वीकार्य एव

अन्यथा "आनय मृगो धावति" इत्यत्र वक्तुः मृगानयने तात्पर्यं वर्तते । एतत् सिद्ध्यर्थं नियमोऽयं तैरङ्गीकार्यः । यदि नाङ्गीक्रियते तदा मृगकर्तृकधा-वने आनयनकर्मत्वान्वयस्य बाधात् वाक्यार्थोऽयमपर्यवसितः । अतः निय-मेऽङ्गीकृते मृगविशिष्टधावनस्य बोधितमानयनकर्मत्वं बाधितं सत् विशेषणी-भूतं मृगमुपसङ्क्रामति । तच्च अबाधितम् । अतः वाक्यार्थोऽयं पर्यवसितः । एतत्तुल्यन्यायेन "पश्य मृगो धावति" इत्यत्रापि अस्यानुसरणमावश्यकम् । अत एव 'श्रुणु मेघो गर्जति' इत्यादयः प्रयोगाः उपपादिताः ।

## सविशेषणेति नियमाङ्गीकारेणैव बोधवर्णने महाभाष्यवचनं सार्थकम्

अस्ति महाभाष्ये – "पचादयः क्रियाः भवतिक्रियायाः कर्त्र्यो भवन्ति" इति । अयं भावः —— पचति भवतीति प्रयोगः क्रियते । अत्र च भवनाश्रय-त्वस्य पच्धात्वर्थान्वित-आख्यातार्थकृतौ अन्वयः । बोधश्च पाकानुकूलाकृ-तिः भवनाश्रयः इति । अत्र पाकविशिष्टकृतेः भवनाश्रयत्वे सम्भवति सति विशेषणीभूतपाकस्यापि भवनाश्रयत्वं भवनकर्तृत्वरूपमिति यावत् बोधितं भवत्येव । अन्यथा भवतिक्रियाकर्तृत्वं पाकस्येति न स्यात् । ततश्च तद्बोधकं भाष्यवचनं कथं युज्येत ?

एवं सति "चैत्रः पचति भवति" इत्यत्र भवत्यर्थान्वितायाः पाकान्वित

आख्यातार्थकृतेः प्रथमान्तार्थे अन्वयः । ततश्च एकवाक्यतानिर्वाहोऽपि अनायासेन । यतोऽयं बोधः – भवनाश्रयः यः पाकः तदनुकूला या कृतिः तद्वदभिन्नश्चैत्रः ।

## प्रथमान्तार्थविशेष्यकाख्यातार्थकृतिप्रकारकबोधः नाव्युत्पन्नः इत्यत्र उपपत्तिप्रदर्शनम्

इयं च व्युत्पत्तिः वर्तते – एकसम्बन्धेन एकविशेषणविशिष्टे तज्जातीयसम्बन्धेन विशेषणान्तरानन्वयः- इति । अन्यथा "भार्यायाः राज- पुरुषः" "घटो द्रव्यत्वस्य" इत्यादिप्रयोगापत्तेः । अस्याः स्वीकारे च एक- सम्बन्धेन = समवायसम्बन्धेन एकविशेषणविशिष्टे = घटत्वविशिष्टे तज्जातीय -सम्बन्धेन = समवायसम्बन्धेन द्रव्यत्वान्वयः विरुद्धः इति ।

एवं सति – "चैत्रः पचति" इति वाक्यात् नैय्यायिकोक्तः बोधः कथमुपपद्यते ? इति वाच्यम् । तथाहि – एकसम्बन्धेन = समवायसम्बन्धेन, एकविशेषणविशिष्टे = चैत्रत्वविशिष्टे, तज्जातीयसम्बन्धेन = समवायसम्बन्धेन विशेषणान्तरस्य = पाकानुकूलकृतेः अन्वयः नोपपद्यते इति कथं पाकानुकूलकृतिवैशिष्ट्यावगाहिबोधवर्णनम् ?

अत्र प्रथमतः प्रतिबन्द्या समाधानं प्रदाय दोषपरिहाराय नियमः परिष्क्रियते ।

प्रथमतः प्रतिबन्दीदानम् – निरुक्तव्युत्पत्तिस्वीकारेऽपि न विभक्त्यर्थप्रकारकशाब्दबोधवादिभिः उक्तप्रयोगः वारयितुं शक्यः । यतस्तेषां मते घटो द्रव्यत्वस्य इति वाक्याज्जायमानबोधोऽयम् । द्रव्यत्वप्रतियोगिकः यः षष्ठ्यर्थसमवायसम्बन्धः तत्प्रकारको बोधः । स च न पूर्वोक्तव्युत्पत्त्यविरुद्धः । यतः अत्र घटे विशेषणान्तरद्रव्यत्वस्य तज्जातीयसम्बन्धेन नान्वयबोधः भवति ।

अपि तु विशेषणान्तरद्रव्यत्वप्रतियोगिकतत्सम्बन्धसजातीयसमवायप्रकारकः । अतः न दोषः । एवमेव 'राजपुरुषः भार्यायाः' इत्यत्र भार्यानिरूपितषष्ठ्यर्थसम्बन्धप्रकारको बोधः जायत इति नोक्तदोषः ।

अतः नैय्यायिकैरेव परिष्कारान्तरमादाय परिहारः क्रियते – तथाहि । एकसम्बन्धेन एकविशेषणविशिष्टे विशेषणान्तरनिरूपिततत्सजातीयसम्बन्धप्रकारकबोधो न इति व्युत्पत्तिरङ्गीकरणीया । एवं सति 'भार्यायाः राजपुरुषः' 'घटो द्रव्यत्वस्य' इत्यत्र न तादृशो बोधः भवितुमर्हति । “चैत्रः पचति” इत्यत्र तु नास्याः व्युत्पत्तेर्विरोधः । यतोत्र समवायेन चैत्रत्वविशिष्टे पाकानुकूलकृतेः समवायेन प्रकारत्वेऽपि कृतिरूपविशेषणान्तरनिरूपिततत्सजातीयप्रकारकत्वं नास्ति इति । अतः प्रथमान्तार्थविशेष्यकाख्यातार्थकृतिप्रकारकबोधः नाव्युत्पन्नः इति सिद्धम् ।

“पचति व्रजती”ति प्रयोगापत्तिश्च नैय्यायिकमते वर्तते इति तु न शङ्क्यम् । अपि तु येषां मते आख्यातार्थकर्ता धात्वर्थविशेष्यः तेषामेव अयं दोषः । यतः अयं बोधः अस्माद् वाक्याद् भवति । “पाककर्ता व्रजनाश्रयः” इति । नैय्यायिकमते च आख्यातार्थस्य कृतिरूपत्वात् कृतेश्च व्रजनाश्रयत्वान्वययोग्यता नास्तीति न पचति व्रजतीति प्रयोगापत्तिः ।

अथ च मीमांसकानां मतेऽपि न पचति व्रजतीति प्रयोगापत्तिः । यद्यपि आख्यातस्य कर्तरि निरूढलक्षणां स्वीकुवर्न्ति ते । परन्तु कर्तुः भावनाविशेषणतया अन्वयं स्वीकुर्वन्ति इति न तेषां मतेऽपि दोषः ।

* * * * *

## प्रथमान्तार्थमुख्यविशेष्यकबोध एव सर्वत्र इति नैय्यायिकमते न निर्बन्धः

नैय्यायिकाः प्रायः प्रथमान्तकर्तृवाचकत्वसमभिव्याहारे प्रथमान्तार्थ-मुख्यविशेष्यकबोधमेव अङ्गीकुर्वन्ति । क्वचित् "पश्य मृगो धावति" इत्यादौ न तथा । अथ च यत्र प्रथमान्तपदं वाक्ये नास्ति तत्र सर्वत्र तमध्याहृत्यैव तदर्थमुख्यविशेष्यकबोधः न वर्ण्यते ।

अपि च क्वचित् प्रथमान्तार्थस्य मुख्यविशेष्यतया भानं तैर्नाङ्गीक्रियते । यथा 'नीलो घटः' इत्यत्र घटस्य मुख्यविशेष्यतया न भानम् । "भूतले घटो न" इत्यत्र घटस्य मुख्यविशेष्यतया न भानम । 'अर्घ्यं नमः' इत्यत्र अर्घ्यस्य च मुख्यविशेष्यतया अभानम् ।

स्पष्टीकृतश्चायमर्थः व्युत्पत्तिवादे –

"अत एव यत्र समानविभक्तिकं विशेष्यवाचकपदं निपातपदं वा नास्ति तत्र प्रथमान्तार्थस्य विशेष्यभासकसामग्रभावात् असौ मुख्यविशेष्यतया भासते" ।

इत्थं च सतिसम्भवे प्रथमान्तपदसमभिव्याहारे प्रथमान्तार्थमुख्यविशेष्यक एव बोधः क्वचित् निपातार्थमुख्यविशेष्यकबोधः भावाख्यातस्थले धात्वर्थवि-शेष्यकः बोधः क्वचित् आख्यातार्थविशेष्यकश्च बोधः अङ्गीक्रियते नैय्या-यिकैः । अन्ततः सर्वत्र एभिः न कुत्रापि निरुक्ताद्यनुशासनस्य उल्लङ्घनं न कृतम् । अपि च लाघवगौरवविचारं विधाय वस्तुनः यथार्थस्वभावमनुसृत्य बोधः वर्णितः इति नैय्यायिकमते प्रथमान्तार्थमुख्यविशेष्यकबोध एव सर्वत्र इति न निर्बन्धः । क्वचित् तैरेवान्यथाङ्गीकृतत्वात् ।

## आख्यातार्थः कः?

"चैत्रः पचति" इत्यादौ को वा आख्यातार्थो भवितुमर्हतीति विचार्य आख्यातार्थः कृतिरेव इति सिद्धान्तितं नैय्यायिकैः । न पुनः कर्ता यः कर्तृत्व-रूपाखण्डधर्मवान् आख्यातार्थः ।

आक्षेपः – अयं क्रमः शास्त्रे दृश्यते – एकस्माद् वाक्यात् कः शाब्दबोधः भवितुमर्हतीति विचारावसरे तेन वाक्येन यादृशः संशयः निवर्तते । तथैव यादृशी जिज्ञासा अग्रे जायमाना तज्जिज्ञासाजनकः तत्संशयनिवारकश्च तादृशैव बोधः तस्माद्भवतीति निर्धार्यते । प्रकृते वर्तते संशयः पाककर्ता एको न वा ? इति । एवं पाककर्ता कः ? इति पाककर्तृत्वावच्छिन्नविशेष्यकजिज्ञा-सापि भवति । एतद् द्वयं पचतीति वाक्यजन्यबोधे आख्यातप्रत्ययात् कर्तुः बोधे एव सम्भवति । अतः नाख्यातार्थः कृतिर्भवितुमर्हति अपि तु कर्तैव ।

परिहारः –संशयनिवारणं जिज्ञासाजननं च आख्यातार्थस्य कर्तरि शक्तिमनङ्गीकृत्यापि निर्वहणं सञ्जायते । तथाहि –कृतौ तावच्छक्तिः आख्यातप्रत्ययस्य अङ्गीक्रियते नैय्यायिकैः । "पचति" इति यदा प्रयुज्यते तदा आख्यातार्थएकत्वसङ्ख्यायाः कृतौ अन्वयः अपेक्षितः । तत्र सम्बन्धः स्वाश्रयसमवेतत्वम् । स्वं = सङ्ख्या, तदाश्रयः = कर्ता, तत्समवेता = कृतिः इति । एवं कृतौ शक्त्यङ्गीकारेपि आख्यातप्रत्ययस्य संसर्गविधया कर्तरि एकत्वं भातमेव इति न पाककर्ता एको न वा इति संशयो भवितुमर्हति । अपि च यदा कृतेर्बोधः कृतेश्च आश्रयतया किञ्चित् चेतननिष्ठतया बोधावश्यम्भावेन पाककर्ता कः इति जिज्ञासा सम्भवत्येव ।

आक्षेपः – यद्यपि आख्यातार्थः कृतिरिति स्वीकारेऽपि पाककर्ता एको न वा इति संशयः उदेति । पाककर्ता कः इति जिज्ञासा च सम्पद्यते एव ।

अथापि "पचति" इति शाब्दबोधानन्तरं ज्ञानान्तरकल्पनया जिज्ञासोदयस्तु विलम्बः जायत इति ।

समाधानम् – वैय्याकरणैः मीमांसकैश्च अवश्यमयं क्षणविलम्बः अभ्युपगत एव । यतः उभावपि कर्तृबोधवादिनौ । वैय्याकरणैश्च आख्यातार्थस्यैकत्वस्य अन्वयं कर्तरि अभिप्रेत्य तस्य धात्वर्थे विशेषणत्वं चाङ्गीकुर्वन्ति । अतः प्रथमम् एककर्तृकः पाकः इति बोधः इष्यते । अनन्तरं पाककर्तृत्वावच्छिन्नविशेष्यकम् एकत्वप्रकारकं मानसज्ञानमुत्पद्यत इति क्षणविलम्बेनैव निरुक्तसंशयानुत्पादजिज्ञासोदयौ उपपादनीयौ ।

मीमांसकमतेऽपि धात्वर्थस्य कर्तर्यनन्वयात् । अपि तु भावनायामन्वयात् क्षणविलम्बेनैव संशयानुदयः जिज्ञासोदयश्चोपपादनीयौ । तथाहि – अयं कार्यकारणभावः तैः स्वीकृतः । धात्वर्थसाधारणकारकप्रकारकशाब्दबुद्धित्वावच्छिन्नं प्रति भावनाविशेष्यतासम्बन्धेन लिङ्गानन्वयिपदजन्योपस्थितिः कारणम् ।

धात्वर्थसाधारणकारकप्रकारकः यः शाब्दबुद्धिः तत्वावच्छिन्नं प्रति भावनानिष्ठा या विशेष्यता तत्सम्बन्धेन लिङ्गानन्वयि यत्पदं तज्जन्या या उपस्थितिः तत्कारणम् । प्रकृते च आख्यातार्थः "पचति" इत्यत्र सङ्ख्या इति स्वीकारे तस्याश्च कर्तृघटितपरम्परासम्बन्धेन अर्थात् स्वाश्रयसमवेतत्वसम्बन्धेन भावनायाम् अन्वयः । अत्र कारणम् – भावप्रधानमाख्यातम् इति स्मृतिः । अस्याः अर्थः भावनातिरिक्ताख्यातार्थं प्रति भावनायाः प्राधान्यम् । एवमेव कर्तुरपि भावनायामन्वयः ।

एवञ्च "पचति" इत्यत्र यः बोधः जायते तत्र पाककर्तृत्वेन पाककर्तरि एकत्वं नावगाहते । अतः प्राथमिकबोधानन्तरं पाककर्ता एकः इति मानसं बोधं स्वीकृत्यैव पूर्वोक्तौ उपपादनीयौ ।

अयञ्च सारः —— आख्यातप्रत्ययेन कर्तुः निरूढलक्षणया बोधः न समञ्जसः । न च 'लः कर्मणि च भावे चाकर्मकेभ्यः' (पा.सू. ३-४-६९) इत्यनुशासनबलात् निरूढलक्ष्यः कर्तापीति वाच्यम् । तत्रैव सूत्रे चकारात् अनुवृत्तं यत् कर्तरीति पदं तस्य भावप्रधाननिर्देशबलात् कर्तृत्वरूपार्थः स्वीक्रियते । तथा च कृतेरेव आख्यार्थशक्यत्वं न तु कर्तुः । एवं स्वीकारे लाघवरूपा युक्तिरप्यस्ति । तथाहि – कर्ता यदि आख्यातशक्यः शक्यतावच्छेदकं भवति कर्तृत्वम् । कृतिमत्वं च कर्तृत्वम् । कृतयश्चानन्ताः इति शक्यतावच्छेदक-प्रयुक्तं गौरवम् । तस्मात् न शक्यः कर्ता, अपि तु कृतिः । कृतित्वं च शक्यतावच्छेदकम् । तच्च जातित्वादेकम् । यदि अनुशासनबलेन कर्तरि इति पदस्वारस्येन कर्तैव आख्यातार्थः इति स्वीक्रियते तदा निरूढलक्ष्यत्वमिति पक्षः गत एव । तस्मात् आख्यातार्थः कृतिरेव ।

## नैय्यायिकमतरीत्या तिङन्तप्रयोगपरिशीलनम्

"पचति" इति वाक्यम्; तस्य विवरणं वाक्यं 'पाकं करोति' इति । तदर्थश्च पाककर्मिकाकृतिरिति । पाकनिष्ठकर्मतानिरूपकत्वं च पाककर्मकत्वम् । अर्थात् पाकविषयकत्वम् । इदमेव कृतेः पाककर्मकत्वम् । विषयत्वं च संसर्गतयापि भासते । प्रकृते "पचति" इत्यत्र पाकस्य कृतौ संसर्गतया भानमिति वक्तव्यम् । न तु विषयतामात्रस्य संसर्गत्वम् । अन्यथा पाकानिष्पत्तिस्थलेपि विषयतामात्रस्य सत्वेन "पचति" इति प्रयोगः आपद्येत । अतः उपधायकत्वरूपानुकूलत्वस्यापि संसर्गत्वमङ्गीकार्यम् ।

अयमपि पक्षः युक्त एव । यतः आख्यातेन पाककर्तृत्वं प्रतीयते । पाककर्तृत्वं च पाकानुकूला या कृतिः तद्वत्त्वम् । अथवा पाकविषयिणी या कृतिः तद्वत्त्वम् इति । न तु अखण्डपदार्थः ।

क्रियाविषयकत्वमपि कर्तृशरीरे प्रवेशनीयम् । अत एव 'मत्तो भूतं न तु मया कृतम्' इति व्यवहारः युज्यते । तथाहि –एकक्रियाविषयककृतितः यत्र नान्तरीयकक्रियान्तरनिष्पत्तिः तत्र कृतिमति पुरुषे क्रियान्तरकर्तृत्वं नास्तीति ।

"ओदनं पचति" इति स्थलं विमृशामः –अत्रास्ति विवरणं वाक्यम् पाकेन ओदनं करोतीति । विवरणेन धात्वर्थस्य पाकस्य कृतौ करणतासम्बन्धेनान्वयः करणीय इति ज्ञायते । एवञ्च कृतिं प्रति पाकस्य करणत्वमभिहितं स्यात् । एतच्च बाधितम् । अपि तु विपरीततया पाकं प्रति कृतेः कारणत्वम् । अतः कथं युज्यते इदं विवरणम्? येन कारणेन विव्रियमाणवाक्यबोधः निश्चितो भवेत् ।

तदत्र परिहारः – सत्यम् । पाककारणकत्वं कृतेः न सम्भवति । किन्तु पाककरणकोदनोद्देश्यकत्वमेव । अनेनेदं ज्ञायते – पाकेन इति न करणे तृतीया अपि तु हेतौ तृतीया इति । न चेदं घट्टकुट्टीप्रभातन्यायमनुसरति । एतावता पूर्वं कृतिं प्रतिकारणत्वं पाकस्य न सम्भवति, अतः कथं पाकेन "ओदनं पचति" इति विवरणं युज्यते ? कथं च शाब्दबोधः? इति रीत्या आशङ्क्य परिहारं वक्ष्यामीति प्रतिज्ञाय, कृतिं प्रति पाकस्य न कारणत्वमनेन वाक्येन बोध्यते, अपि तु कृतेरेव पाकं प्रति कारणत्वं प्रतिपाद्यते इति वा निरूपणीयम् अथवा नेदं तस्य वाक्यस्य विवरणवाक्यमिति वा निरूपणीयम् । न पुनर्पाकेनेत्यत्र करणे तृतीया अपि तु हेतौ तृतीया इति वक्तव्यम् । पुनः प्रश्नस्य तथैवावस्थानात् । अर्थात् प्रश्नस्य पुनर्दार्ढ्यं प्रकारान्तरेण कृतं स्यात् । यतो हि कृतिं प्रति पाकस्य करणत्वं परित्यज्य तदपरपर्यायभूतं हेतुत्वं स्वीकृतमिति ।

नायमाशयोस्य विवरणस्य । अस्त्ययमाशयः – हेतौ तृतीया च अत्र युज्यते । यतो हि हेतुत्वं च प्रयोजकत्वम् । तच्च करणफलसाधारणम् । अन्यथा 'अध्ययनेन वसति' इति प्रयोगानुपपत्तिः । वासं प्रति अध्ययनस्य करणत्वाभावात् । तत्रोच्यते । फलमपीह हेतुः इति । अर्थात् यदग्रे जायमानं फलमध्ययनरूपं तदर्थमेव वासः इति युज्यते वासं प्रति अध्ययनस्य प्रयोजकत्वरूपं हेतुत्वम् । तदत्रापि समानम् । तथा हि – ओदनविषयककृतेः फलं पाकः । अतः पाकोऽपि कृतिं प्रति हेतुरेव । एवञ्च बोधः । पाकप्रयोज्या या ओदनविषयिणी कृतिः तद्वान् इति । ओदनकृतेश्च पाकप्रयोज्यत्वं पाकफलकत्वं पाकानुकूलत्वे पर्यवसितम् । एवञ्च पाकेन इत्यादि विवरणेन कृतौ अनुकूलतासम्बन्धेन धात्वर्थस्य पाकस्य अन्वयः इत्युक्तं भवति ।

अत एव **आख्यातवाददीधितौ** –

"यत्नमात्रं शक्यम् । विषयत्वं जनकत्वं वा संसर्गमर्यादया भासते" इति दीधितिपङ्क्तेः विवरणं मथुरानाथभट्टाचार्यैर्दत्तम् 'वाकारः' समुच्चयार्थः इति ।

आख्यातार्थेषु अन्यतमः भवति कालः । यथा "चैत्रस्तण्डुलं पचति" इत्यत्र वर्तमानकालः आख्यातार्थः । तस्य च व्युत्पत्तिवैचित्र्यात् कृतिरूपाख्यातार्थे अन्वयः । तस्याश्च चैत्रः इति प्रथमान्तार्थे अन्वयः । तत्रैव एकत्वसङ्ख्यारूपः आख्यातार्थः अन्वेति ।

तथा च परिष्कृतो बोधः —— तण्डुलनिरूपिताधेयताश्रयरूपपरावृत्तिजनकतेजस्संयोगानुकूल- वर्तमानकालिककृतिमान् एकत्वविशिष्टश्चैत्रः। अत्र स्पष्टं वर्तमानकालिककृतिमान् इत्यत्र कालस्य कृतिविशेषणत्वम् । कृतेश्च प्रथमान्तार्थे चैत्रे विशेषणत्वम् । एकत्वसङ्ख्याया अपि चैत्रे विशेषणत्वम् ।

एवञ्च तण्डुलनिष्ठाधिकरणतानिरूपिता या आधेयता तदाश्रयः यः रूप-

परावृत्तिजनकतेजस्संयोगः अथवा विक्लित्त्यनुकूलः व्यापारः तदनुकूला या कृतिः वर्तमानविशिष्टा तद्वत्त्वम् एकत्वविशिष्टे चैत्रे इति ।

चैत्रेण तण्डुलः पच्यते इति कर्माख्यातस्थले च अयं बोधः – एकत्वविशिष्टचैत्रनिष्ठवर्तमानकालिक- कृतिजन्यव्यापारजन्य(विक्लित्त्याश्रय)रूपपरावृत्त्याश्रयः तण्डुलः इति ।

एकत्वविशिष्टः यः चैत्रः, तन्निष्ठा या वर्तमानकालिकी कृतिः, तज्जन्यो यो व्यापारः, तज्जन्यं यत्फलम् विक्लित्तिरूपम् अथवा रूपपरावृत्तिः तदाश्रयः तण्डुलः ।

अत्र कृतेः जन्यत्वविषयत्वोभयसम्बन्धेन धात्वर्थव्यापारे तस्य च धातोरर्थे फले जन्यतासम्बन्धेनान्वयः कर्माख्यातस्थलनियन्त्रितव्युत्पत्तिवैचित्र्यात् । कर्माख्यातार्थश्च आश्रयत्वमात्रम् । तदतिरिक्तस्य कर्मत्वघटकस्यान्यत्वलभ्यत्वात् । आश्रयत्वं च स्वरूपसम्बन्धेन प्रथमान्तार्थे अन्वेति । स च वृत्तिनियामकसम्बन्ध एव ।

अत एव नञ्समभिव्याहृतस्थले तत्सम्बन्धावच्छिन्नतदभावबोधनं प्रथमान्तार्थे युज्यते । यथा चैत्रेण तण्डुलः न पच्यते इति ।

“चैत्रेण सुप्यते” इति भावाख्यातस्थले च चैत्रकर्तृकस्वापः इति धात्वर्थमुख्यविशेष्यक एव बोधः । अत्राख्यातस्य भावार्थे विहिततया तस्य चार्थस्य अन्यलभ्यतया (धातुलभ्यतया) केवलं साधुतासम्पादकत्वमेव । अपि च आख्यातार्थसङ्ख्या एकत्वरूपा शाब्दबोधे न भासते । एकत्वसङ्ख्यान्वयिनः अभावात् ।

“चैत्रो न पचति” इत्यत्र बोधोऽयम् – पाकानुकूलवर्तमानकृत्यभाववान् चैत्रः इति । अर्थात् पाकस्य अनुकूलः यः वर्तमानकालिकः कृतिरूपः तदभा-

वाश्रयश्च चैत्रः इति । ततश्च पचतिना प्रतिपाद्यायाः पाकविशिष्टकृतेः नञर्था-भावे स्वनिष्ठप्रतियोगितानिरूपकत्वसम्बन्धेनान्वयः । तस्य च आश्रयतास-म्बन्धेन प्रथमान्तार्थे चैत्रेऽन्वयः ।

चैत्र एव पचति इत्यत्र च अयं बोधः – चैत्रः पाकानुकूलकृतिमान् चैत्रा-न्यः पाकानुकूलकृत्यभाववान् इति । विवरणं च – एवकारस्य अन्ययोगव्यव-च्छेदार्थकत्वम् । अर्थात् अन्यस्मिन् = विशेष्यादितरत्र, योगस्य = विशे-ष्यगतस्य विशेषणसम्बन्धस्य, व्यवच्छेदः = अवृत्तिः । प्रकृते अन्यस्मिन् = चैत्रादितरत्र मैत्रे योगस्य = पाककर्तृत्वस्य, व्यवच्छेदः = अवर्तनम् । तथा च – एवकारस्यान्यः अभावश्चार्थः । अन्यपदार्थश्च भेदविशिष्टः । तदैकदेशे भेदे प्रथमान्तपदोपस्थाप्यस्य चैत्रस्य स्वनिष्ठप्रतियोगितानिरूपकत्वसम्बन्धे-नान्वयः । आख्यातार्थभूतायाः कृतेः अन्वयः एवकारार्थाभावे । एवकारार्थे अन्यस्मिन् पूर्वोक्ताभावस्यान्वयः । एतत्सर्वं व्युत्पत्तिवैचित्र्याधीनम् ।

—०—

## वैय्याकरणमते आख्यातवादः

वैय्याकरणाश्च धात्वर्थमुख्यविशेष्यकबोधमङ्गीकुर्वन्ति । एतेषां मते आख्यातपदं तावत् मुख्यम् ।

### धात्वर्थमुख्यविशेष्यकबोधः निरुक्तादिग्रन्थानुसारी

एभिः धात्वर्थमुख्यविशेष्यकः बोधः अङ्गीक्रियते । स च प्रमाणमूलः । तथाहि –

निरुक्ते च भावप्रधानमाख्यातमिति कथनात् धात्वर्थस्य भावस्यैव मुख्य-विशेष्यत्वम् । तदत्र विवरणम् – "चत्वारि पदजातानि । नाम-आख्यात-

-उपसर्ग-निपाताः" इत्युपक्रम्य नामलक्षणमाख्यातलक्षणं च निरूपयति । नामलक्षणं च 'सत्वप्रधानानि नामानि' इति । आख्यातलक्षणं च 'भावप्रधान-माख्यातम्' इति । अत्राख्यातशब्दः तिङन्तं बोधयति । तथैव कात्यायनवचने दृष्टत्वात् । "आख्यातम् आख्यातेन क्रियासातत्ये" इत्यादौ पचतभृज्जता, खादतमोदता इति उदाहरणात् । तर्हि सर्वमाख्यातजं नाम इत्यत्र कथम् ? न हि तत्र आख्यातशब्दः तिङन्तपरतया स्वीकर्तुं शक्यः । तत्रोच्यते – लक्षणया प्रत्ययरूपैकदेशं विहाय धातौ वर्तते आख्यातशब्दः अतः नायुक्तता ।

**निरुक्तभाष्ये च** – "नमति आख्यातार्थं प्रति विशेषणीभवति इति नाम" - इत्युक्त्वा "वाक्ये हि आख्यातं प्रधानम् । तदर्थत्वात् गुणभूतं नाम" इति दर्शनेन सुबन्तार्थः अर्थात् नामार्थः आख्यातशब्दिततिङन्तार्थ- विशेषणम् । तिङन्तजन्यबोधे च धात्वर्थः भाव एव विशेष्यः । तिङर्थस्तु कर्त्रादिः तत्र विशेषणम् । अपि च महाभाष्ये निरुक्तसमानार्थकं वाक्यं दृश्यते । क्रियाप्रधानमाख्यातमिति । अतः धात्वर्थमुख्यविशेष्यकशाब्दबोध एव महाभाष्यकारैरभिप्रेतः ।

न च एवं व्यवस्था क्रियते । "यत्र प्रथमान्तपदसमभिव्याहारः तत्र प्रथमान्तार्थमुख्यविशेष्यक एव बोधः । अन्यत्र च भावप्रधानशाब्दबोधः" इति तु न वाच्यम् ।

अत्र कारणद्वयम् । (१) तादृशबोधस्याननुभवात् (२) निरुक्तग्रन्थविरोधाच्च । तत्र द्वितीयस्य विवरणम् – "यत्रोभे भावप्रधाने भवतः" इत्यादिः निरुक्तग्रन्थः ।

अत्र हि **निरुक्तभाष्ये**– "नामाख्यातयोः परस्परविनाभूतयोः स्वस्वपदार्थोक्तौ एकस्य भावप्राधान्यम् अन्यस्य सत्वप्राधान्यम् । अथ पुनः यत्र वाक्ये

ते उभे नामाख्याते भवतः तत्र वाक्ये भावप्रधाने आख्यातार्थप्रधाने वाक्ये हि आख्यातं प्रधानम् । तदर्थत्वात् गुणभूतं नाम । तदर्थस्य भावनिष्पत्तौ अङ्गत्वात् । एवं तावत् वाक्ये आख्यातं प्रधानम्" इति ।

अनेन ग्रन्थेन अयमर्थः स्फुटीकृतः । वाक्यं नाम सुबन्ततिङन्तचयः । यथोक्तम् – "सुप्तिङन्तचयो वाक्यं क्रिया वा कारकान्विता" - इति । एवञ्च नामाख्यातसमुदायात्मकं हि वाक्यम् । तत्राख्यातं प्रधानमिति निरुक्ते उक्तत्वेन, तत्रापि आख्यातजन्यबोधे भावः प्रधानमिति उक्तत्वेन धात्वर्थमुख्यविशेष्यक एव बोधः निरुक्तादिसम्मतः ।

**प्रातिशाख्ये च** आख्यातलक्षणप्रतिपादकवाक्यम् – "तदाख्यातं येन भावः सधातुः" इति । तद्विवरणावसरे तद्भाष्यकारैः –'सधातुरिति तृतीयार्थे प्रथमा' इत्युक्तम् । ततश्च येन सधातुना भावमभिदधाति तत् आख्यातम् इत्यर्थः लभ्यते । एवञ्च तिङन्तमाख्यातपदबोध्यम् । तस्य च निरुक्तानुसारेण वाक्ये प्राधान्यम् ।

## भावप्राधान्यं प्राचीननैय्यायिकाभिमतमपि

न्यायभाष्यकारः पञ्चमाध्याये आख्यातलक्षणं वदति – प्रकृतादर्थात् असम्बद्धार्थम् अर्थान्तरम् । (न्या.सू. ५-२-७) इति सूत्रे "क्रियाकालयोगाभिधायि आख्यातम् । धात्वर्थमात्रं च कालाभिधानविशिष्टम् - इति । अस्यभाष्यस्यायमर्थः –कालेनाभिधानेन कारकेण च विशिष्टं धात्वर्थमात्रम् आख्यातार्थ इति ।

न्यायवार्तिककारश्च – ते विभक्त्यन्ताः पदम् - (न्या.सू. २-२-५६) इति सूत्रे क्रियाकालयोगाभिधायि क्रियाप्रधानम् आख्यातम् - यथा पचति

इति समनन्तरोक्तं भाष्यं विवृणोति । एवञ्च क्रियाप्रधानमाख्यातमिति कथयता न्यायवार्तिककारेण स्पष्टं महाभाष्यादरः कृतः इति ज्ञायते । तत्रापि महाभाष्ये एतादृशमेव वचनं दृश्यते – "क्रियाप्रधानमाख्यातम्" इति । यथा तत्र भाष्ये प्रत्ययार्थकालकारकसङ्ख्याद्यपेक्षया धात्वर्थस्य प्राधान्यं सूच्यते । तथैव न्यायवार्तिककारेणापि सूचितम् । एतेषु प्रत्ययार्थेषु धात्वर्थस्यैव प्राधान्यमिति । अपि च आख्यातपदं च तिङन्तबोधकमिति स्पष्टं तेनैवान्यत्र निरूपितत्वेन तस्यान्यार्थकल्पनां कृत्वापि तस्याभिप्रायन्तरवर्णनं न कर्तुं शक्यते । तथाहि – ते विभक्त्यन्ताः पदम् इति सूत्रे एव एवं ब्रूते – द्वयी विभक्तिः स्वादयः तिबादयश्च । तत्र स्वाद्यन्तं नाम तिबाद्यन्तमाख्यातमिति । एवं प्राचीननैय्यायिकैरपि वैय्याकरणमतं स्वीकृतमेव ।

## कथं तर्हि प्रकृतिप्रत्ययौ सहार्थं ब्रूतः तयोर्मध्ये प्रत्ययार्थः प्रधानः इत्यस्य वैय्याकरणमते गतिः?

अयमाशयः – धात्वर्थमुख्यविशेष्यकबोधवादिनः वैय्याकरणाः। परन्तु प्रकृतिप्रत्ययौ सहार्थं ब्रूतः तयोर्मध्ये प्रत्ययार्थः प्रधानः इति नियमानुसारेण प्रकृत्यर्थापेक्षया प्रत्ययार्थस्यैव प्राधान्यमित्यवगमनात् प्रकृतिरूपधात्वर्थापेक्षया प्रत्ययार्थस्य आख्यातार्थस्य प्राधान्यं स्यात् न तु धात्वर्थस्य इति कथं धात्वर्थमुख्यविशेष्यकबोधः वैय्याकरणैर्वर्ण्यते इत्याक्षेपः । अत्रोच्यते – भावप्रधानमाख्यातमिति स्मृतिश्च निरवकाशरूपा । तस्या बाधः न कल्पनीयः । अपि तु तदनुगुणतया प्रकृतिप्रत्ययौ सहार्थं ब्रूतः तयोर्मध्ये प्रत्ययार्थं ब्रूतः इत्यस्यैव सङ्कोचः कार्यः। तर्हि तद्व्युत्पत्तेः कोऽर्थः? इत्युक्ते एवम् – प्रकृतिप्रत्ययौ इति व्युत्पत्तिघटकप्रत्ययपदम् सुप्प्रत्ययपरं न तु तिङ्प्रत्ययपरम् । अतः न तद्व्युत्पत्तेः विरोधः शङ्क्यः ।

**आक्षेपः** – भावप्रधानमाख्यातमित्यस्य अर्थान्तरवर्णनमेव क्रियताम् । न तु प्रकृतिप्रत्ययौ इत्यस्य नियमस्य । तदित्थम् – "कृतिप्रधानकमाख्यातम्" इति । अत्र भावपदार्थः न धात्वर्थरूपः, अपि तु भावनारूपः इति ।

**समाधानम्** – एवमुक्तेपि नास्य वचनस्य सावकाशत्वं वर्णयितुं शक्यते । प्रत्युत निरवकाशत्वमेवास्य वचनस्य । यतः नियमान्तरमस्ति । प्रत्ययार्थप्रधानं स्यात् प्रकृत्यर्थोविशेषणमिति । तेनैव पूर्वोक्तार्थस्य सिद्धत्वात् तदर्थबोधकस्य अस्य वचनस्य वैय्यर्थ्यम् ।

अपि च "चैत्रेण सुप्यते" इत्यादिभावाख्यातस्थले अव्याप्तिः । धात्वर्थविशेष्यतया भावनायाः अभानात् । अतः नेदं निरुक्तवचनं धात्वर्थेतरप्राधान्यपरमित्युक्तम् ।

## प्रथमान्तार्थमुख्यविशेष्यकशाब्दबोधाङ्गीकारे दोषोद्भावनम्

धात्वर्थस्य सर्वत्र प्रथमान्तार्थविशेषणत्वे पाकक्रिया भवति इत्यर्थकः पचतिभवतीति प्रयोगः महाभाष्यस्य न युज्येत । अपि च "पचति व्रजति इत्यपि प्रयोगः स्यात्" इति महाभाष्यप्रयोगानुपपत्तिः अतिप्रसङ्गश्च ।

अन्यच्च "पश्य मृगो धावति" इत्यत्र कथं प्रथमान्तार्थमुख्यविशेष्यकबोधे वाक्यार्थनिर्वाहः?[1]

---

(1) (काशिका-वृत्तिः तुपश्यपश्यताहैः पूजायाम् ८।१।३९

तु पश्य पश्यत अह इत्येतैर् युक्तं तिङन्तं नानुदात्तं भवति पूजायां विषये। तु माणवकस्तु भुङ्क्ते शोभनम्। पश्य पश्य माणवको भुङ्क्ते शोभनम्। पश्यत पश्यत माणवको भुङ्क्ते शोभनम्। अह अह माणवको भुङ्क्ते शोभनम्। **पूजायाम् इति किम्? पश्य मृगो धावति**। पूजायाम् इति वर्तमाने पुनः पूजायाम् इत्युच्यते निघातप्रतिषेधार्थम्। तद् धि प्रतिषेधस्य प्रतिषेधेन सम्बद्धम् इति।) प्राचीनवृत्तिभूतायां काशिकायामयं प्रयोगः उल्लिखतः इति दर्शनाय अत्र अधःटिप्पणी नियोजिता।

तथाहि – क्रियाविशेषणकप्रथमान्तार्थमुख्यविशेष्यकशाब्दबोधस्वीकारे एकवाक्यता न स्यात् । एकवाक्यता च एकमुख्यविशेष्यकबोधजनकत्व-रूपा । प्रकृते "पश्य मृगो धावति" इत्यत्र वाक्यभेदः आश्रयणीयः आपतेत् । एवं "धावति मृगः" इत्यस्मात् वाक्यादयं बोधः नैय्यायिकमते धावनानुकूलकृतिमान् मृगः इति । अत्र धावनस्य दर्शनक्रियायां कर्मतः अन्वयः इष्टः न सिद्ध्येत् । यतो हि एकत्रविशेषणतयान्वितस्य अपरत्र विशे-षणतयाऽन्वयः अनुपपन्नः इति नियमानुसारेण अत्र अन्वयस्य कर्तुमशक्य-त्वात् । तदित्थम् – धावनं च आख्यातार्थभूतायां कृतौ अनुकूलतासम्बन्धेन अन्वयात्, एकत्रविशेषणत्वेनान्वितम् । तस्यैव अन्यत्र दर्शनक्रियायां कर्म-तासम्बन्धेनान्वये अन्यविशेषणतान्तरापत्तिः स्यादिति पूर्वोक्तव्युत्पत्ति-विरोधः । अतः पृथक्पृथक् वाक्यं स्वीकृत्य वाक्यार्थः वर्णनीयः। तथात्वे च स्पष्टम् एकमुख्यविशेष्यकबोधजनकत्वाभावात् एकवाक्यत्वं नास्ति । तथाहि – वाक्यद्वयम् – धावति मृगः इत्येकं वाक्यम् । "पश्य त्वम्" इत्यपरं वाक्यम् । अत्र त्वमितिपदम् अध्याहृतम् । प्रथमवाक्याद् बोधः धावनानुकू-लकृतिमान् मृगः इति । द्वितीयवाक्याद् बोधः दर्शनाश्रयस्त्वमिति । एकत्र मृगः मुख्यविशेष्यः, अपरत्र त्वंपदार्थः मुख्यविशेष्यः। तौ च परस्परं भिन्नौ । एवञ्च भिन्नमुख्यविशेष्यकबोधजनकत्वेन पश्य मृगो धावति इत्यस्य भिन्नवा-क्यत्वं स्यात् न त्वेकवाक्यत्वम् । अतः सम्भवत्येकवाक्यत्वे वाक्यभेदो हि दूषणम् इति वचनानुसारेण प्रकारान्तरेण एकवाक्यत्ववर्णने सम्भाविते सति भिन्नवाक्यत्वकल्पनात् कल्पनागौरवप्रयोजकः वाक्यभेदरूपदोषः वर्तते ।

**आक्षेपः** - प्रकृते न वाक्यभेदरूपः दोषः आपादयितुं शक्यः । तथाहि – कर्मत्वेन धावनानुकूलकृतिमन्मृगस्य दर्शनक्रियायाम् अन्वयः क्रियते । एवञ्च बोधः – धावनानुकूला या कृतिः तद्वान् यः मृगः तद्विषयकं यद्दर्शनं

तदाश्रयस्त्वम् इति । अत्र च एक एव मुख्यविशेष्यः, स च त्वंपदार्थःइति एकमुख्यविशेष्यकबोधजनकत्वमेवास्ति इति "पश्य मृगो धावति" इति वा-क्यस्य एकवाक्यत्वं युज्यते ।

**समाधानम्** – न चायं परिहारः युज्यते । एवं सति मृगस्य दर्शनकर्म-त्वेन कर्मणि द्वितीया (पा.सू. २-३-२)इति द्वितीया स्यात् ।

**आक्षेपः** – नात्र द्वितीया भवितुमर्हति । यतः कर्मणि द्वितीया इति सू-त्रस्यायमर्थः – प्रातिपदिकार्थस्य विशेष्यतया यत्र कर्मत्वं विवक्ष्यते तत्र कर्मत्वे अनभिहिते द्वितीया इति । प्रकृते मृगस्य कर्मतासम्बन्धेन दर्शने अन्वयात् प्रातिपदिकार्थविशेष्यतया कर्मत्वस्य अविवक्षितत्वेन न द्वितीया ।

**समाधानम्** – एवं सति नामार्थधात्वर्थयोः साक्षाद्भेदेनानन्वयः इति व्युत्पत्तेर्विरोधः । नामार्थस्य मृगस्य कर्मतासम्बन्धेन साक्षाद्भेदसम्बन्धेन धा-त्वर्थे दर्शने अन्वयकरणात् ।

आक्षेपः – अयं नियम एव अप्रामाणिकः। अतः पुनर्द्वितीयाविभक्त्याप-त्तिः तदवस्थैव ।

समाधानम् – नायं नियमोऽप्रामाणिकः। यतो हि अस्य नियमस्याभावे तण्डुलस्य कर्मतासम्बन्धेन पाके अन्वयतात्पर्येण "तण्डुलः पचति" इति प्रयोगः स्यात् । तद्वारणाय अयं नियमः अङ्गीकार्य एव । एवञ्च नामार्थस्य तण्डुलस्य साक्षाद्भेदसम्बन्धेन कर्मतासम्बन्धेन धात्वर्थे पाके अन्वयकरणात् एतद्व्युत्पत्तिविरोधेन न तत्तात्पर्येण तादृशः प्रयोगः सम्भवतीति निर्वोढुं शक्यम् ।

आक्षेपः – अस्त्वन्ततः कर्मणि द्वितीया इत्यनेन अत्र द्वितीयापत्तिर्दुर्वारा इति वाच्यम्। परन्तु मृगपदात् यदा द्वितीया क्रियते तदा 'लटः शतृशानचौ

अप्रथमा समानाधिकरणे' (पा.सू. ३-२-१२४) इति सूत्रेण अप्रथमा समानाधिकरणत्वात् धावतीत्यत्र लटः शतृप्रत्ययः आपद्येत ।

समाधानम् – शतृप्रत्ययः आपद्यताम् । न तेन द्वितीया बाध्यते । तर्हि किं बाध्यम्? कर्मणोभिधानमेव । न चात्र कर्मणोभिधानम् । अतः द्वितीयापत्तिः युक्तैव । एवञ्च '"पश्य मृगो धावति" इति वाक्यप्रयोगापेक्षया "पश्य मृगं धावन्तम्" इति वाक्यप्रयोगः स्यात् ।

आक्षेपः – न च "पश्य मृगो धावति" इत्यत्र तमिति पदमध्याहृत्य इदं प्रयोगान्तरं वार्यते । तत्कथं दोषापादनम् ?

समाधानम् – तमित्यध्याहारे भिन्नानेकमुख्यविशेष्यकबोधजनकत्वेन भिन्नवाक्यत्वे सति वाक्यभेदप्रसङ्गः । अपि च त्वदुक्तरीत्या बोधवर्णने धावनस्य दर्शनक्रियाकर्मत्वं तु न निर्वहति इति दोषस्तु वर्तते एव ।

आक्षेपः – अयि भोः! एवमेव बोधः भवति, एवं बोधः न भवतीति कथं वा निर्बन्धः क्रियते? पुरुषाणां वैश्वरूप्यबुद्धिमत्वात् तैस्तैः तथा तथा बोधः जायते एव ।

समाधानम् – न मयाऽयं बोधः निर्णीयते । किन्तु महर्षिणा भाष्यकारेण निर्णीतः एवं रीत्यैव बोधः भवतीति । तथाहि **भाष्यपङ्क्तिः** - "क्रियापि कृत्रिमं कर्म । क्रियापि हि क्रियया ईप्सिता भवति । कया सन्दर्शनादिक्रियया" इति ।

आक्षेपः – ननु नात्र द्वितीया विभक्तेरुत्पत्तिः । यतः द्वितीया च प्रातिपदिकाद्विहिता । तदर्थं प्रातिपदिकसञ्ज्ञा अपेक्षिता । न च वाक्यार्थस्य प्रातिपदिकसञ्ज्ञा । न वा वाक्यस्य । प्रकृते च मृगः कर्मीभूतनामार्थः न, अपि तु धावनविशिष्टमृगः । तस्य कर्मबोधकं च धावति मृगः इति वाक्यम् । अतः प्रातिपदिकसञ्ज्ञाविरहात् न तत्परं द्वितीयाविभक्तिरुत्पद्यते । अत एव नामार्थ-

स्यैव भेदसम्बन्धेन साक्षात् धात्वर्थान्वये व्युत्पत्तिविरोधः, न तु वाक्यार्थस्य भेदसम्बन्धेनान्वये। एवं स्वीकारे एव नैके प्रयोगाः अपि उपपद्यन्ते । ते च प्रयोगाः एवं भवन्ति – 'जानामि सीता जनकप्रसूता', 'श्रुत्वा ममैतन्माहात्म्यं तथा चोत्पत्तयः शुभाः' इत्यादयः।

समाधानम् – अथापि एतावता द्वितीयापत्तेः वारणेपि न भाष्योक्तं धावनक्रियायाः दर्शनक्रियाकर्मत्वमुपपन्नम्।

आक्षेपः – वाक्यैकवाक्यता च उपपादिता एव खलु।

समाधानम् – सत्यम् । वाक्यैकवाक्यताया उपपादनेऽपि भाष्यसिद्धा या पदैकवाक्यता सा तु अनुपपादिता एव । अथ तुष्यतुन्यायेन वाक्यैकवाक्यताङ्गीकारेपि दोषान्तरमस्ति। तथाहि – नीलविशिष्टघटस्य दर्शनकर्मत्वं यदा वक्त्रा प्रतिपादयितुमिष्टम् तदा नीलं घटं जानाति इति न स्यात् । किन्तु नीलो घटः जानातीति स्यात् । यतो हि नीलविशिष्टघटस्य वाक्यार्थत्वात् तद्बोधकस्य पदसमुदायात्मकवाक्यस्य प्रातिपदिकसञ्ज्ञाविरहेण द्वितीयायाः अनुत्पादात् । अथ च प्रथमान्तार्थविशेष्यकबोधस्वीकारः । 'पश्य मृगो धावति' इत्यत्र एकवाक्यता तु न स्यादेव।

## "पश्य मृगो धावति" इत्यत्र वैय्याकरणसमयः

वैय्याकरणमते तु "पश्य मृगो धावति" इत्यत्रायं बोधः – मृगकर्तृकधावनकर्मकं दर्शनमिति । अर्थात् मृगः धावन्नस्ति। तादृशं धावनं पश्य इति प्रयोक्तुरभिप्रायः। अत्र च धावनं कर्मतासम्बन्धेन धात्वर्थे दर्शने अन्वेति। एवं सति न नामार्थयो.... इति व्युत्पत्तिविरोधः। न चात्र द्वितीया भवितुमर्हति। कर्मबोधकस्य धातुत्वेन प्रातिपदिकसञ्ज्ञाविरहात् । न च विशिष्टस्य यद्भवति तद्विशेषणस्यापि भवति इति नियमेन मृगविशिष्टस्य धावनस्य यदा कर्मत्वम्

तदा मृगस्यापि कर्मत्वेन तद्बोधकस्य प्रातिपदिकसञ्ज्ञासद्भावात् तदुत्तरं द्वितीया स्यादेव इति वाच्यम् ।

तदत्र परिहारः । सत्यम् । नियमस्तु अङ्गीक्रियते । परन्त्वयमपि नियमः – बहिरङ्गसंस्कारपेक्षया अन्तरङ्गसंस्कारस्य प्रबलत्वेन प्रथमं धावनविशेषणत्वेन मृगस्य यः प्रथमाविभक्तिरूपः संस्कारः वृत्तः स च न निवर्तितुमर्हति ।

कथं तर्हि 'श्रुत्वा ममैतन्माहात्म्यं तथा चोत्पत्तयःशुभाः' इत्यादयः प्रयोगाः इत्युक्ते आर्षास्ते प्रयोगा इत्युत्तरम् ।

एतावता प्रबन्धेन मतान्तरमपि खण्डितं भवति । व्युत्पत्तिविरोधपरिहाराय केचन एवं कथयन्ति – केवलं दृश्-धातोरेव धावनकर्तृमृगकर्मकदर्शने अथवा मृगकर्तृकउत्कटधावने लक्षणा स्वीक्रियते । इतराणि च पदानि तात्पर्यग्राहकाणीति । नचेदं युक्तम् । अस्मदुक्तरीत्या विनैव लक्षणां बोधवर्णनसम्भवात् । अपि च तेषां पक्षे अनेकपदानां व्यर्थत्वापरपर्यायतात्पर्यग्राहकत्वकल्पना कर्तव्या इति बोध्या ।

## नैय्यायिकस्य आक्षेपः, वैय्याकरणमतरीत्या परिहारश्च

आक्षेपः – भवद्भिः “पश्य मृगो धावति” इत्यत्र यद्रीत्या शाब्दबोधः वर्णितः तद्रीत्यैव तत्सजातीयस्थले आनय मृगो धावति इत्यत्रापि वर्णनीयः । न च तद्युज्यते । तथाहि – आनय मृगो धावतीत्यत्र एवं बोधः वर्णनीयः – मृगो धावतीति वाक्यात् मृगकर्तृकधावनस्य बोधः तस्य च धात्वर्थे आनयने कर्मतासम्बन्धेनान्वयः । परन्त्विदं बाधितम् । मृगनिष्ठधावनस्य आनयनक्रियाकर्मत्वान्वयस्य अयोग्यत्वात् ।

प्रत्युत अस्मन्मते एव आनुकूल्यम् । तथाहि – मृगो धावतीति वाक्यात् धावनानुकूलकृतिमान् मृगः इति बोधः । अत्र च मुख्यविशेष्यः तादृशो

मृगः । तस्य कर्मतासम्बन्धेन आनयनेऽन्वेतुं शक्यते । अतः एकमुख्यविशे-ष्यकबोधजनकत्वात् एकवाक्यत्वम् अस्मन्मते युज्यते न तु त्वन्मते ।

परिहारः – शिखी ध्वस्तः इत्यत्र ध्वस्तत्वं कुत्रेति विचार्यमाणे न शि-खाविशिष्टपुरुषस्य बाधात् । अपि तु पुरुषे विशेषणीभूतायां शिखायामेव ध्व-स्तत्वम् । एवं यथा सति विशेष्ये बाधे ध्वस्तत्वस्य विशेषणे पर्यवसानं तथैव प्रकृतेऽपि । अत्र च प्रमाणम् – सविशेषणे हि विधिनिषेधौ विशेषमुपसङ्क्राम-तः सति विशेष्ये बाधे । एवञ्च प्रकृते मृगविशिष्टधावने आनयनकर्मत्वान्वयस्य बाधिततया विशेषणे मृगे आनयनकर्मत्वम् अन्वेति । एवञ्च मृगकर्मकानयन-म् इति बोधः पर्यवसितः । अतः सम्भवत्येव एकवाक्यत्वम् इति न प्रथमा-न्तार्थमुख्यविशेष्यकबोधः समञ्जसः ।

## वैय्याकरणमतरीत्या नैय्यायिकमते दोषान्तरनिरूपणम्

अपि च प्रथमान्तार्थमुख्यविशेष्यकबोधस्वीकारे व्युत्पत्तिविरोधोऽपि । तथाहि – एवं व्युत्पत्तिः एकविशेषणवैशिष्ट्येनोपस्थिते तज्जातीयसम्बन्धेन विशेषणान्तरान्वयः अव्युत्पन्नः इति । नचेयं व्युत्पत्तिः नाङ्गीक्रियत इति वाच्यम् । अन्यथा अतिप्रसङ्गात् । अर्थात् राजपुरुषः भार्यायाः, घटो द्रव्य-त्वस्य इत्यादि प्रयोगापत्तिः स्यात् ।

तदित्थम् – अस्य नियमस्याभावे पूर्वोक्तप्रयोगाः समीचीना एव । तथाहि –राजपुरुषो भार्यायाश्च इत्यस्मात् अयं बोधः विवक्षितः । यथा पुरुषः स्वस्वा-मिभावसम्बन्धेन राजविशिष्टः तथा स्वस्वामिभावसम्बन्धेन भार्याविशिष्टोऽपि इति बोधमभिप्रेत्य यदा वक्ता राजपुरुषो भार्यायाः इति प्रयुङ्क्ते तदा एतद् वाक्याद् बोधः न बाधितः। एवं समवायेन घटत्वविशिष्टे समवायेन द्रव्यत्ववैशिष्ट्यं घटो द्रव्यत्वस्य इति वाक्याद् बोधो जायते । नाप्ययं

बाधितः । अतः तद्वारणाय अयं नियमोऽङ्गीकार्यः नावश्यकः । एवं सति एक-विशेषणवैशिष्ट्येनोपस्थिते= स्वस्वामिभावसम्बन्धेन राजविशिष्टे पुरुषे, तज्जातीयसम्बन्धेन = स्वस्वामिभावसम्बन्धेन, विशेषणान्तरस्य भार्यावैशिष्ट्यस्य अन्वयः अव्युत्पन्नः इति न तत्तात्पर्येण तादृशः प्रयोगः । अपि च एकविशेषणवैशिष्ट्येनोपस्थिते = समवायेन घटत्वविशिष्टे घटे, तज्जातीयसम्बन्धेन सजातीयसमवायेन विशेषणान्तरस्य द्रव्यत्ववैशिष्ट्यस्यान्वयः अव्युत्पन्नः ।

एवमेव प्रथमान्तपदस्थले "चैत्रः पचति" इत्यादौ न प्रथमान्ता- र्थमुख्यविशेष्यकबोधवर्णनं युज्यते । तदेवम् – एकविशेषणवैशिष्ट्येनोपस्थिते = समवायेन चैत्रत्वविशिष्टे चैत्रे, तज्जातीयसम्बन्धेन = सजातीयसमवायेन विशेषणान्तरस्य कृतिवैशिष्ट्यस्य अन्वयः अव्युत्पन्नः । अतः धात्वर्थमुख्यविशेष्यकबोध एव समञ्जसः ।

## प्राचीनवैय्याकरणरीत्या शाब्दबोधः

"चैत्रस्तण्डुलं पचति" इत्यत्र अयं बोधः – तण्डुलाभिन्नाश्रयकविक्लित्त्यनुकूलः एकचैत्राभिन्नाश्रयकः वर्तमानो व्यापारः इति । विवरणम्– तण्डुलेनाभिन्नः यः आश्रयः तन्निष्ठं यदाश्रयत्वं, तन्निरूपिका या विक्लित्तिः तदनुकूलो यो व्यापारः, स च चैत्राभिन्नः यः आश्रयः, एकत्वसङ्ख्याविशिष्टः तन्निरूपकः वर्तमानकालिकश्च ।

अत्र प्रयोगे तण्डुलपदोत्तरद्वितीयायाः आश्रयः इत्यर्थः, अनन्यलभ्यत्वात् । 'कर्मणि द्वितीया' इति सूत्रबलात् कर्म द्वितीयावाच्यम् । तच्च आश्रयरूपमिति भावः । तथाहि – फलव्यापारयोर्धातुः इति । क्रिया फलं च धातोरर्थः । तत्र जन्यत्वं च संसर्गमर्यादया लभ्यते इति बोध्यम् । प्रकृते च

अनन्यलभ्यार्थत्वम् आश्रयरूपार्थस्य । तत्र प्रकृत्यर्थः अभेदेनान्वेति । प्रकृत्यर्थस्य प्रत्ययार्थे अभेदेनान्वये तु उदाहरणं प्रसिद्धमेव । यथा 'साऽस्य देवता' (पा.सू.) इति सूत्रेण देवतातद्धितप्रत्ययस्थले आग्नेयम् इत्यादौ (अग्निः देवता अस्य इति) प्रकृतिप्रत्ययार्थयोः अभेदान्वयः दृष्टः ।

आश्रयश्च स्ववृत्त्याश्रयत्वनिरूपकतासम्बन्धेन विक्लित्तिरूपफले अन्वेति । तस्य च जनकतासम्बन्धेन धात्वर्थे व्यापारेऽन्वयः । कर्त्राख्यातस्य इमेऽर्थाः भवन्ति– आश्रयः, सङ्ख्या, वर्तमानकालश्चेति । एतेषामन्वयः – प्रथमान्तपदार्थः चैत्रः आख्यातार्थे आश्रये अभेदेनान्वेति । आख्यातार्थसङ्ख्या च स्वसमानपदोपात्ताश्रये अन्वेति । कालश्च वर्तमानरूपः धात्वर्थव्यापारे अन्वेति । अन्ततः तिङर्थोऽपि धात्वर्थेऽन्वेति इति विवरणं कर्तरिप्रयोगे ।

"चैत्रेण तण्डुलं पच्यते" इत्यत्र बोधः – तण्डुलाभिन्नाश्रयकविक्लित्त्यनुकूलः चैत्राभिन्नाश्रयकः वर्तमानव्यापारः । विवरणम् – तण्डुलेनाभिन्नः यः आश्रयः, तन्निष्ठं यदाश्रयत्वं, तन्निरूपिका या विक्लित्तिः, तदनुकूलः यः व्यापारः स च चैत्रेण यः अभिन्नः आश्रयः, तन्निरूपकः वर्तमानकालिकश्च । अत्र चैत्रेण इत्यत्र तृतीयाः आश्रयः अर्थः अनन्यलभ्यत्वात् । तस्य धात्वर्थे व्यापारे अन्वयः । प्रथमान्तपदार्थान्वितः यः आख्यातार्थः आश्रयः तस्य धात्वर्थे फले चान्वयः । फलं च व्यापारेऽन्वेति इति ध्येयम् ।

"चैत्रेण सुप्यते" इत्यत्र अयं बोधः – चैत्राभिन्नाश्रयकः वर्तमानस्वापः । विवरणम् – चैत्रेणाभिन्नः यः आश्रयः तन्निरूपकः स्वापः स च वर्तमानकालिकः । अत्र आख्यातप्रत्ययः धात्वर्थमनुवदति तिङ्त्वेन रूपेण । लट्त्वेन च वर्तमानकालं बोधयतीति विशेषः ।

"चैत्रो न पचति" इत्यत्र एवं बोधः – चैत्रकर्तृकपाकाभावः इति । विवरणम् – चैत्राभिन्नो यो कर्ता तन्निरूपको यो पाकः तदभावः ।

अत्र प्रमाणं कार्यकारणभावः – प्रकारतासम्बन्धेन नञर्थविशेष्यकशाब्दबोधं प्रति धातुजन्यभावनोपस्थितिः विशेष्यतासम्बन्धेन कारणम् ।

'नीलो घटः' इत्यत्र एवं बोधः – नीलाभिन्नो घटः इति । अत्र घटपदार्थे घटे नीलपदोत्तरप्रथमार्थः प्रातिपदिकार्थः अभेदेनान्वेति ।

## नवीनवैय्याकरणरीत्या शाब्दबोधः

चैत्रः "तण्डुलं पचति" इति वाक्यात् अयं बोधः – कर्मीभूततण्डुलविशिष्टः चैत्राभिन्नकर्तृकः वर्तमानः पाकः । अत्र पाके विशेषणत्रयं भासते । तथाहि – (१) कर्मीभूतं यत्तण्डुलं तद्विशिष्टत्वम् (२) चैत्रेणाभिन्नः यः कर्ता तत्कत्वम् । (३) वर्तमानकालिकत्वं च । पूर्वमतात् अयं विशेषः – पूर्वमते आख्यातस्य कर्ता इत्यर्थः । अत्र मते आख्यातस्य कर्तृत्वशक्तिमान् इत्यर्थः ।

चैत्रेण तण्डुलं पच्यते इति कर्माख्यातस्थले च धातुतः व्यापारावच्छिन्नफलमुपस्थाप्यते । अतः धात्वर्थफलमुख्यविशेष्यकबोधः वर्ण्यते ।

अत्र प्रमाणम् – सुपः आत्मनः क्यच् (पा.सू. ३-१-८) इति सूत्रे एवं भाष्यपङ्क्तिः – इष्यते पुत्रः इत्यर्थे पुत्रीयति इति न । भिन्नार्थकत्वात् । किन्तु पुत्रमिच्छति इत्यर्थ एव ।

इयं च पङ्क्तिः कर्माख्याते कर्त्राख्याते च भिन्नविशेष्यकबोधस्वीकारे एव युज्यते । अन्यथा उभयत्र व्यापारमुख्यविशेष्यकबोधस्वीकारे भिन्नार्थकत्वादिति उदाहृतभाष्यासङ्गतिः ।

"चैत्रो न पचति" इत्यत्र एवं बोधः –आरोपिता चैत्रकर्तृकपाकक्रिया । विवरणम् – चैत्राभिन्नः यः कर्ता, तन्निष्ठा या पाकक्रिया, सा आरोपिता इति । अस्मिन्मते नञः आरोपितत्वमित्यर्थः । अपि च प्रथमम् आरोपितत्व-रूपेण बोधः, अनन्तरं पाकाभावविषयको बोधः मानसः जायते इति ।

"चैत्र एव पचति" इत्यत्र एवं बोधः – अवधारण(ज्ञानविशेषः)विषय-चैत्रकर्तृकः पाकः । अर्थात् अवधारणविषयः यः चैत्रः, तदभिन्नः यः कर्ता, तत्कः पाकः इति । अत्रावधारणं नाम ज्ञानविशेषः अवधारणत्वेन भासते । स च एवकारार्थः इति बोध्यम् ।

––०––

## मीमांसकमते आख्यातवादः

एते च मीमांसकाः भावनामुख्यविशेष्यकशाब्दबोधवादिनः । अत्र सर्वत्र भावना नाम आर्थीभावना गृह्यते न तु शाब्दीभावना । इदमस्ति मतम् — चैत्रस्तण्डुलम् इति प्रयोगकरणे अर्थात् क्रियापदं विना प्रयोगे नैव निराकाङ्क्षः बोधः भवितुमर्हतीति अतः क्रियापदम् आवश्यकम् । अतः "पचति" इत्य-ध्याहृत्यैव पाकानुकूलभावनामुख्यविशेष्यकबोधः वर्णनीयः । एवं सर्वत्र क्रि-यापदस्यावश्यकतास्त्येव ।

## भावप्रधानमाख्यातमिति निरुक्तवचनस्य मतान्तरविवृतार्थः न युक्तः

भावप्रधानमाख्यातमिति च वचनं यास्कस्य । अस्य वैय्याकरणाः एव-मर्थमभिप्रयन्ति – भावो नाम धात्वर्थः । स च सर्वापेक्षया प्रधानः इति विवृ-ण्वन्ति । स च अयुक्तः । तत्र कारणमिदम् – भावो नाम धात्वर्थः इति वै-

व्याकरणैरेव परिभाषितमिति तु सत्यम् । धात्वर्थः केवलः शुद्धः भाव इत्यभिधीयते इति वचनात् । तस्य एवं सति सर्वत्र प्रयोगः तदर्थे एव करणीयः । कृतश्च तैः न तु सर्वत्र । यथा भावार्थे घञ्-प्रत्ययः विधीयते । अत्रच भावः धात्वर्थः । उदाहरणम् रागः इति । 'भावे' (पा.सू. ३-३-१८) इति सूत्रानुसारेण । परन्तु क्वचित् भावशब्दः अन्यार्थेष्वपि प्रयुज्यते । यथा 'तस्य भावस्त्वतलौ' (पा.सू. ५-१-११९); अस्यार्थः – प्रकृतिजन्यबोधे प्रकारीभूतो यः धर्मः सः भावः । तदर्थे त्वप्रत्ययः तल्प्रत्ययश्च । अत्र च स्पष्टम् – भावशब्दार्थः न धात्वर्थः स्वीकृतः वैय्याकरणैरेव । अतः सर्वत्र भावशब्दस्य धात्वर्थपरत्वमेव इति नियमः तैरेव त्यक्तमिति न निरुक्तवचनस्थितस्य भावशब्दस्य तत्परत्वमेव इति नियमः ।

अपि च शब्दस्यायमर्थः इति स्वीकारे किञ्चित् प्रमाणमपेक्षितम् । न चात्र भावशब्दस्य तदर्थत्वे प्रमाणमस्ति ।

किञ्च भावप्रधानमाख्यातमित्यस्य धात्वर्थप्राधान्यबोधकत्वे सर्वसम्मतव्युत्पत्तिविरोधः । तथाहीयं व्युत्पत्तिः —— प्रकृतिप्रत्ययौ सहार्थं ब्रूतः तयोर्मध्ये प्रत्ययार्थः प्रधानः इति । एतदनुसारेण धात्वर्थापेक्षया आख्यातार्थस्यैव प्राधान्यमिति न धात्वर्थस्य मुख्यत्वं घटते युज्यते । यतः प्रकृत्यर्थः धात्वर्थः । तदपेक्षया प्रत्ययार्थो नाम आख्यातार्थः इति ।

## तर्हि भावप्रधानमाख्यातमित्यस्य कोऽर्थः? किं च मीमांसाभिमतार्थस्वीकारे प्रमाणम्?

अयं मीमांसकमतेऽस्य वचनस्यार्थः – भावो नाम भावना । सा च भवितुः भवनानुकूलः भावयितुः व्यापारविशेषः । अत्र भूधातुः णिजन्तः अच्प्रत्ययान्तश्च । तथा च भावयतीति भावना इति विवरणम् । ततश्च

आख्यातार्थेषु भावनाकालसङ्ख्यादिषु भावनाया एव प्राधान्यम् अन्येषाम् एतदपेक्षया गुणत्वम् इति बोधयितुमेव भावप्रधानमाख्यातमिति निरुक्तस्मृतिः आरब्धा ।

आक्षेपः – भावशब्दः धात्वर्थे एव प्रसिद्धः । तन्निरूपितविशेष्यत्वं धात्वर्थभावनाया बोधयितुम् इदमिति वक्तुं शक्यते ।

परिहारः – प्रकृतिप्रत्ययौ सहार्थं ब्रूतः तयोस्तु प्रत्ययार्थः प्रधानः इति नियमेनैव प्रत्ययार्थस्य आख्यातार्थस्य प्रकृत्यर्थापेक्षया धात्वर्थापेक्षया विशेष्यत्वं सिद्धमिति अस्य नियमस्य तदर्थकत्वे गतार्थत्वं स्यात् ।

तथा च – मीमांसकमतरीत्या अयमभिप्रायः । क्रियापदं च कर्तरिप्रयोगे द्वितीयान्तादि पदार्थस्य विशेष्यं समर्पयति । द्वितीयाद्यर्थश्च प्रातिपदिकार्थस्य विशेष्यः। प्रकृतिप्रत्ययौ सहार्थं ब्रूतः तयोर्मध्ये प्रत्ययार्थः प्रधानः इति स्वीकारात् । इदं च प्रातिपदिकार्थापेक्षया सुबर्थस्य प्राधान्यविषये एव इति न मन्तव्यम् । अपि तु प्रकृतिशब्देन धातोरपि ग्रहणात् तदर्थापेक्षया तदुत्तराख्यातप्रत्ययस्य अर्थोऽपि प्रधान एव । निरुक्तनियमस्याश्रयणसम्भवेन तत्त्यागायोगात् । तर्हि भावप्रधानमाख्यातमित्यस्य का गतिः? इत्यत्रेदमुत्तरम् – सन्ति च आख्यातप्रत्ययस्य बहवोऽर्थाः । कालसङ्ख्याकृत्यपरपर्यायभावनादयः । तेषु सर्वेषु भावनायाः एव विशेष्यत्वम् । अन्येषां विशेषणत्वमिति। एतत्सर्वमभिप्रेत्यैव अस्ति निरुक्तं वचः 'भावप्रधानम् आख्यातम्' इति । एवमर्थस्वीकारे च प्रकृतिप्रत्ययौ सहार्थं ब्रूतः तयोर्मध्ये प्रत्ययार्थः प्रधानः इति व्युत्पत्तिविरोधपरिहारान्यथानुपपत्तिरेव प्रमाणमित्युक्तं भवति ।

## कथं प्रथमान्तार्थस्य क्रियाविशेषणत्वम् ?

मीमांसकमते अयमाक्षेपः सम्भवति, तथाहि– द्वितीयाद्यन्तं पदं च कर्मा-

दिकारकबोधकमिति क्रियापदमाकाङ्क्षते । कारकक्रिययोः परस्परसाकाङ्क्ष-त्वात् ।

तत एव तदर्थस्य क्रियार्थविशेषणत्वं युज्यते । प्रथमान्तं च पदं न तथा इति कथं तदर्थस्य क्रियाविशेषणत्वम्? अतः भावनामुख्यविशेष्यकबोधः कथम् ?

परिहारः – प्रथमान्तार्थस्यापि क्रियाविशेषणत्वम् अस्त्येव । प्रमाण-सिद्धत्वात् । तथाहि – चैत्रः इति केवलं प्रथमान्तप्रयोगेण न वाक्यं परिनि-ष्ठितं भवति । अर्थात् निराकाङ्क्षशाब्दबोधजनकं न भवतीति । किं करोति चैत्रः? इति नियमेन आकाङ्क्षासम्भवात् । सत्यम् । तथापि चैत्रः पण्डितः इति वाक्याद् यः बोधः पण्डिताभिन्नश्चैत्रः इति जायते तदनन्तरं कस्यापि आका-ङ्क्षानुदयेन प्रथमान्तार्थस्य एतादृशस्थलविशेषेषु क्रियाविशेषणत्वं नास्त्येव । न चेदं युक्तम् । अस्त्येव तत्रापि प्रथमान्तार्थस्य क्रियाकाङ्क्षा तदर्थं च क्रिया-पदमपि । अस्ति किल वार्तिककारानुशासनम् –'अस्तिर्भवन्तीपरः प्रथमपुरुषः अप्रयुज्यमानोप्यस्ति' इति । एवम् “अभिहिते कर्तरि प्रथमा” इति (केचन तिङादिनाभिहिते कर्तरि प्रथमा इति प्रथमायाः अपि कारकत्वमङ्गीकुर्वन्ति । अतः कारकाणां क्रियापेक्षासद्भावात् क्रियापदमावश्यकम् इति) ।

यस्मिन् वाक्ये क्रियापदं न प्रयुक्तं तत्र लट्प्रत्ययपरकअस्धातोः प्रयोगः वर्तते एव इति अस्यार्थः । एवञ्च एतावता प्रबन्धेन किमस्ति प्रमाणं प्रथमा-न्तार्थस्य क्रियाविशेषणत्वे ? इत्यत्र अनुशासनमेव प्रमाणम् इति समाहितम् । तथा च चैत्रः इत्यत्र वा, चैत्रः पण्डितः इत्यत्र वा क्रियापदम् अपेक्षितमेव । तदर्थे च प्रथमान्तार्थस्य विशेषणमपि ।

न चायं नियमः अनावश्यकः । यतः तत्तद्वाक्ये आकाङ्क्षानिवारकतत्तत्प-

दानामपेक्षितत्वात् अस्ति व्यतिरिक्ततत्तत्क्रियापदाध्याहारोपि आवश्यकः, न केवलम् अस्धातुमात्रम् । अतः अस्त्यध्याहारमात्रबोधकम् इदं वचनमनपेक्षितमिति ।

आक्षेपः – न चेदम् अनुशासनमन्यथासिद्धम् । यतः अनेनानुशासनेन एतावदेव बोध्यते – प्रथमपुरुषस्थलं यत्र तत्र क्रियापदाभावे एव अस्तीत्यादि क्रियापदाध्याहारः । न तु मध्यमपुरुषादिस्थले । वार्तिके प्रथमपुरुषः इति पदस्वारस्यात् । अन्यथा तदुपादानवैय्यर्थ्यात् ।

परिहारः – सत्यम् । आपाततः एवं प्रतीयते । परन्त्विदमुपलक्षणम् । न चोपलक्षणत्वे किं गमकम्? क्लृप्तः कार्यकारणभाव एव । तथा हि –

(१) प्रातिपदिकार्थप्रकारकशाब्दबुद्धित्वावच्छिन्नं प्रति विशेष्यतासम्बन्धेन सुप्जन्योपस्थितिः कारणम् ।

(२) लिङ्गसङ्ख्याव्यतिरिक्तसुबर्थप्रकारकशाब्दबुद्धित्वावच्छिन्नं प्रति क्रियापदजन्योपस्थितिः कारणम् ।

कार्यकारणभावस्यायमर्थः – प्रातिपदिकार्थः सुबर्थे प्रकारः । सुबर्थश्च क्रियायां प्रकारः इति क्लृप्तः । अतः अहं पण्डितः, त्वं पण्डितः इत्यादिषु प्रथमपुरुषभिन्नस्थलेषु असि, अस्मि इत्यादि पदानि सन्तीति कृत्वैव शाब्दबोधः वर्णनीयः । अतः प्रथमान्तार्थमुख्यविशेष्यकबोधः अयुक्तः ।

## प्रातिपदिकार्थस्य तदुत्तरसुप्प्रत्ययार्थे अन्वयः कथम्? अनुपपत्तेः

कार्यकारणभावेन अयमर्थः सिद्धः प्रातिपदिकार्थः सुबर्थे प्रकारः इति । परन्त्विदमयुक्तम् । किञ्चिदर्थकशब्दस्य किञ्चिदर्थकशब्दे अन्वयः युज्यते । द्वयोरपि अर्थवत्वात्, विशेष्यविशेषणसम्भवात् इति यावत् । यद्येकस्य अन-

र्थकत्वे अन्यस्य तत्रान्वयः वक्तुं न शक्यते । प्रकृते प्रातिपदिकार्थसत्वेपि प्रथमार्थः न कोऽप्यस्तीति कथं तत्रान्वयः? न च प्रथमायाः सङ्ख्यारूपार्थः अस्त्येव इति वाच्यम् । तत्सत्वेऽपि तत्र प्रातिपदिकार्थस्य अन्वये असम्भवश्च, न केवलं एतावदेव, किन्तु विपरीततया सङ्ख्याया एव प्रकृत्यर्थविशेषणतया अन्वयः अनुभवबलेनाङ्गीकर्तव्यः । अतः अर्थः नास्तीति कथं सुबर्थे प्रातिपदिकार्थान्वयः? इति शङ्का अस्त्येव ।

समाधानम् – अनुशासनमस्ति – 'प्रातिपदिकार्थलिङ्गपरिमाणवचनमात्रे प्रथमा' (पा.सू.२-३-४६) । अस्यायमर्थः –अत्र वचनपदं च सङ्ख्यावाचकम् । तदर्थे प्रथमा इति तु अनुशासनलब्धमेव । परन्तु प्रकृते तनुपयुक्तम् । अथ च प्रातिपदिकार्थः यदा प्रातिपदिकेन विवक्षितः तदा तदुत्तरं प्रथमा इति वर्णने चासाङ्गत्यम् । अतः प्रातिपदिकात् प्रातिपदिकार्थे एव प्रथमा इति वक्तव्यम् । नचोक्तार्थानामप्रयोगः इति नियमानुसारेण प्रथमायाः अप्रयोगः अथवा प्रातिपदिकस्याप्रयोगः आपद्यत इति वाच्यम् । एतादृशस्थलेषु यथाऽन्यत्र अनुवाद्यानुवादकत्वभावः दृष्टः सः अत्रापि स्वीक्रियते इत्युत्तरम्। तथाहि – प्रातिपदिकार्थः प्रातिपदिकेनैव लभ्यते, तदर्थे साधु इति अनुवादाय प्रथमाप्रयोगः क्रियते । अत्रापि एवमाशङ्कां सिद्धवत्कृत्य समाहितम् – प्रथमाया एव प्रातिपदिकार्थत्वं न तु प्रातिपदिकस्य । परन्तु प्रातिपदिकं तदर्थे = प्रातिपदिकार्थे विशेषे प्रथमायाः तात्पर्यमिति ग्राहयति । अतस्तत्प्रयोगः । तर्हि प्रकृतिप्रत्ययार्थयोः किं भेदेनान्वयः उताभेदेन? नाद्यः । बाधितत्वात् । उभयोरप्येकत्वादिति भावः । स्वस्मिन् स्वभेदस्यासम्भवात् । नाप्यभेदः । तयोरभेदान्वयस्य अव्युत्पन्नत्वात् । अपि च उद्देश्यतावच्छेदकविधेयतावच्छेदकयोः अभेदे तथा बोधासम्भवः । एवञ्च प्रथमाविभक्त्यर्थ एव प्रातिपदिकार्थविशेषश्चैत्रादिः आख्यातार्थभावनायां प्रकारतया भासते ।

किञ्च वार्तिकमतानुसारेण प्रथमायाः अर्थः कः? इति विचार्यमाणे अभिहिते प्रथमा इति किल सः अनुशशास । अस्यार्थः –अन्येनाभिहिते कारके प्रथमा भवतीति । ततश्च प्रथमाविभक्तेः कारकवाचित्वं सिद्ध्यति । अस्य कारणमिदम् – प्रातिपदिकस्य तात्पर्यग्राहकत्वकल्पने व्यर्थत्वमापद्यत इति मत्वा तदुक्तार्थे सत्येव प्रथमा भवतीति अनुशासनं कृतम् । एवञ्च "चैत्रः पचति" इत्यत्र चैत्रपदोत्तरप्रथमायाः कर्तृत्वम् अर्थः । स च चैत्रनिष्ठः; चैत्रश्च चैत्र इति प्रातिपदिकार्थः । तदन्वितं भवति कर्तृत्वम् । तस्य च आख्यातार्थ-भावनायामन्वयः इति वक्तव्यम् ।

## प्रथमार्थ-आख्यातार्थयोः समानत्वात् एकस्याप्रयोगः?

प्रथमायाः अर्थः कर्तृत्वम् । भावनायाः अपि अर्थः कर्तृत्वमेव । तत्कथं तत्र तस्यान्वयः? अपि च अभेदेनान्वयेऽपि आख्यातेनैव कर्तृत्वस्याभिहित-त्वात् पुनस्तदभिधानं प्रथमया व्यर्थम् इत्याक्षेपः ।

समाधानम् – आख्यातेन यद्यपि कर्तृत्वं बोधितम् । तथापि चैत्रनिष्ठ-त्वेन न बोधितम् । तद्बोधनाय प्रथमया कर्तृत्वाभिधानमावश्यकम् ।

आक्षेपः – तर्हि प्रथमया एव चैत्रत्वावच्छिन्नचैत्रवृत्तित्वेन कर्तृत्वस्य बोधनात् आख्यातेन कर्तृसामान्याभिधानं न युज्यते इति वैपरीत्यं स्यात् ।

समाधानम् – इदमस्ति भाट्टदीपिकायाम् –

यद्वृत्तिकारकत्वं स्वान्वयि क्रियाप्रतिपादकेन पदेन वृत्त्या प्रतिपाद्यते तत्वं प्रथमाप्रयोजकत्वमभिहितत्वम् ।

इदं च वाक्यम् अभिहिते प्रथमा इति वार्तिके स्थितस्य अभिहितत्वस्य विवरणरूपम् । अस्य सारः – यद्वृत्तिकारकत्वं चैत्रवृत्तिकारकत्वं = कर्तृरू-

पकारकत्वं तदन्वयिक्रियाप्रतिपादकेन पदेन = "पचति" इति पदेन यदि अभिधीयते तर्ह्येव चैत्रपदोत्तरं प्रथमा इति । अतः आख्यातेन कर्तृत्वस्य सामान्यतोभिधानम् आवश्यकम् । तथात्वे एव चैत्रादिपदोत्तरप्रथमायाः साधुत्वम् ।

अतः उभयोरपि प्रयोगः अवश्यमाश्रयणीयः ।

## आख्यातप्रथमाभिहितकर्तृत्वस्य भिन्नरूपता उत समानरूपता?

इदानीं प्रथमाख्याताभ्यां कर्तुः बोधनमावश्यकमिति प्रकारान्तरेण प्रतिपाद्य कर्तृत्वं नाम किमिति विचार्यते। तदित्थम् – कर्तृत्वं नाम किमिति विचार्य मीमांसकैरेवं निर्णयः कृतः – कर्तृत्वं चाखण्डो धर्मः । नानुकूलकृतिमत्वम्, अन्यथा चैत्रेण पच्यत इत्यत्र विवरणवाक्ये चैत्रेण पाकः क्रियतेत्यत्र क्रियत इतिपदं व्यर्थं स्यात् । यतः कर्तृत्वबोधनाय तृतीया एवालम् । तदर्थं क्रियत इतिपदापेक्षाभावात् । यदि कर्तृत्वमखण्डधर्मरूपा तदा सा तृतीयाबोध्या इति कृतिसाध्यत्वरूपकर्तृत्वबोधनाय क्रियत इति प्रयोगः आवश्यकः ।

एवमेव कृत्यभिधानं च न प्रथमाप्रयोजकम् । अपि तु अखण्डकर्तृत्वाभिधानमेव प्रथमाप्रयोजकम् । अन्यथा "चैत्रेण सुप्यते" इत्यत्र चैत्रपदात् प्रथमा स्यात् ।

तथाहि – अस्य विवरणं वाक्यम् - चैत्रेण स्वापः क्रियत इति । अत्र आख्यातप्रत्ययः कृतिरूपभावनाबोधकः । अतः न कृत्यभिधानं प्रथमाप्रयोजकम् । प्रथमायाश्च अर्थः कर्तृत्वम् । तच्च आख्यातबोधितम् । तस्य च अन्वयः भावनायामेव, कार्यकारणबलात् । तथाहि – सुबर्थप्रकारकशाब्दबुद्धित्वावच्छिन्नं प्रति क्रियापदजन्योपस्थितिः विशेष्यतासम्बन्धेन कारणम् ।

एवञ्च आख्यातप्रथमयोः कर्तृत्वरूपार्थः समान एव। तृतीयाबोधितं कर्तृत्वं पूर्वोक्तापेक्षया भिन्नमेव इत्यङ्गीकर्तव्यम् । अतः उक्तार्थानामप्रयोगः इत्यादयः शङ्का अपि न सन्तीति बोध्यम् ।

## नैय्यायिकाक्षेपः मीमांसकसमाधानं च

नैय्यायिकाक्षेपः – आख्यातार्थमुख्यविशेष्यकबोधापेक्षया प्रथमान्तार्थमुख्यविशेष्यकबोध एव उचितः, प्रमाणसद्भावत् । कार्यकारणभाव एव प्रमाणम् । सोपि लघुभूतः भवति प्रथमान्तार्थमुख्यविशेष्यकबोधस्वीकार इति यावत् ।

अत्र कार्यकारणभावः एवम् – कालादिव्यतिरिक्तआख्यातार्थप्रकारशाब्दबुद्धित्वावच्छिन्नं प्रति अन्याविशेषणीभूतप्रथमान्तपदजन्योपस्थितिः विशेष्यतासम्बन्धेन कारणम् ।

अस्य कार्यकारणभावस्य कल्पने अन्वयव्यतिरेकौ एव प्रमाणम् । "चैत्रः पचति" इत्यादौ तिङर्थसङ्ख्यायाः अन्याविशेषणीभूते प्रथमान्तपदोपस्थाप्ये चैत्रे अन्वयः दृष्टः । चैत्र इव मैत्रो गच्छतीत्यादौ अन्यविशेषणीभूते प्रथमान्तपदोपस्थाप्ये नान्वयः तिङर्थसङ्ख्यायाः दृष्टः । यतः अन्यविशेषणीभूते प्रथमान्तपदोपस्थाप्ये अन्वयः कालादिव्यतिरिक्तस्य तिङर्थस्य दृष्टः नान्यस्य अतः अत्र प्रयोगे चैत्रः इवशब्दार्थे विशेषणम् । इवशब्दार्थश्च सादृश्यम् । सादृश्ये प्रतियोगितया चैत्रस्यान्वयात् । "चैत्रः पचति" इत्यत्र प्रथमान्तार्थमुख्यविशेष्यकबोध एव स्वीकार्यः । स च बोधः इत्थम् – पाकानुकूलकृतिमान् एकत्वविशिष्टश्चैत्रः ।

अपि च प्रयोगान्तरे पण्डितश्चैत्रः इत्यादौ पण्डिताभिन्नश्चैत्रः इति प्रथमान्तार्थमुख्यविशेष्यकबोधः अवश्यं स्वीकरणीय एव । यतः नात्र आख्यातपद-

मस्ति । यदि स्यात् तर्हि तदर्थमुख्यविशेष्यकबोधः मीमांसकाभिप्रेतः स्यात् । अथ च चैत्रः इति प्रकृतप्रयोगे विद्यमाना प्रथमा प्रातिपदिकार्थान्वययोग्य- भूतमर्थं नोपस्थापयति ।

एवञ्च सति सम्भवे प्रथमान्तार्थमुख्यविशेष्यकबोधस्यैव सर्वत्र मुख्यविशेष्यतया भानमुचितम् ।

मीमांसकमतरीत्या समाधानम् – आख्यातार्थकृतौ आख्यातार्थवर्तमानादिकालार्थस्य यथान्वयः क्रियते । यथा "चैत्रः पचति" इत्यत्र आख्यातार्थकृतौ वर्तमानकालाद्यर्थः आधेयतासम्बन्धेनान्वेति तथा प्रथमान्तार्थचैत्रादेरपि कृतावेवान्वयः सम्भवति । नापि विशेषणतया एव आख्यातार्थकृतेः प्रथमान्तार्थे भाने नास्ति नियामकम् । एवञ्च नैय्यायिकोक्तकार्यकारणभावे न किमपि प्रमाणम्, अप्रयोजकत्वात् । नचास्ति प्रमाणं नैय्यायिकानुभव एव इति वाच्यम् । जैमिन्यादिमहर्ष्यनुभवविरुद्धानुभवस्य अनुचितत्वात् । किञ्च न कुत्रापि न्यायदर्शनकारः महर्षिः प्रथमान्तार्थमुख्यविशेष्यकबोधः स्वानुभवसिद्धः इति सूचयति ।

## आख्यातार्थसङ्ख्यायाः प्रथमान्तार्थे अन्वये असाङ्गत्यम्

नैय्यायिकोपरि मीमांसकाक्षेपः – (अवान्तरशङ्काक्रमेण उत्तरं प्रदाय समर्थनमत्र क्रियत इति पूर्वपक्षसिद्धान्तयोर्मध्ये भ्रमः मा भूत्) "चैत्रः पचति" इत्यादौ नैय्यायिकैः तिबर्थसङ्ख्यायाः चैत्रेऽन्वयं प्रदर्श्य एकत्वविशिष्टश्चैत्रः इति बोधः वर्ण्यते । नचेदं युक्तम् । एकत्वविशिष्टश्चैत्रः इति बोधो आवश्यकः । स च प्रकारान्तरेण सिद्धः । तदपि लघुनोपायेनैव । तथाहि – चैत्रः इति पदोत्तरमेव अस्ति सुप्प्रत्ययः । तदर्थः एकत्वम् । तच्छीघ्रोपस्थितिकम् । अतः तस्यैव प्रथमान्तार्थेऽन्वयः । नतु आख्यातार्थसङ्ख्यायाः, निराकाङ्क्षप्रतिपत्त्य-

जनकत्वात् । अर्थात् प्रागेव सुबर्थ-एकत्वस्य अन्वयात् निराकाङ्क्षप्रतिपत्ति-सम्भवात् ।

अत्र "चैत्रः पचति" इत्यादौ आख्यातार्थसमन्वयसम्भवेपि, चैत्रः मैत्रश्च गच्छतः इत्यत्र आख्यातार्थसङ्ख्याया एव प्रथमान्तार्थे अन्वयः समुचितः। न चात्रापि तत्तत्प्रातिपदिकोत्तरविभक्त्यर्थस्यैव प्रथमान्तार्थे अन्वयः समुचितः इति वाच्यम् । सत्यम् । अन्वयस्तु युज्यते । बोधस्तु विवक्षितः न सिद्ध्यति । द्वित्वाश्रयौ चैत्रमैत्रौ इति बोधः विवक्षितः । स च द्वित्वान्वये एव युज्यते । न तु एकत्वान्वये । प्रातिपदिकोत्तरविभक्त्यर्थश्च न द्वित्वम्, अपि तु एकत्वमिति ।

समाधानम् – अत्र तत्तत्प्रातिपदिकोत्तरविभक्त्यर्थस्य तत्तत्प्रातिपदिकार्थे एवान्वयः उचितः । न तु भिन्नपदोपात्तार्थस्य द्वित्वस्यान्वये इति समानपदोपात्तत्वमेव पदार्थस्य पदार्थान्तरे अन्वयप्रयोजकत्वम् । अत्र च चैत्रपदोत्तरसुपा मैत्रोत्तरपदसुपा च एकत्वं बोधितम् । तस्य स्वस्वप्रकृत्यर्थे अन्वये सम्भवति सति तत्त्यागो अयुक्तः ।

अपि च एकस्यान्वये सति अपरस्य अशाब्दत्वम्, अन्वितस्य च शाब्दत्वं वक्तव्यम् । तत्रापि अशाब्दत्वकल्पनं समानपदोपात्तस्य न युक्तम् । अपि तु भिन्नपदोपात्तस्य ।

किञ्च द्वित्वभानं चैत्रमैत्रयोरावश्यकम् । तच्च चैत्रपदोत्तरसुपा मैत्रपदोत्तरसुपा च सिद्धम् । यतः एकत्वविशिष्टश्चैत्रः इति एकत्वविशिष्टः मैत्रः इति बोधानन्तरं द्वित्वे एव पर्यवसानात् । आक्षिप्तार्थस्यापि मीमांसकैः शाब्दत्वस्वीकारात् ।

* * * * *

## वस्तुतः नैय्यायिकमते कः प्रधानदोषः? किञ्च मीमांसकसिद्धान्तः?

आख्यातार्थसङ्ख्यायाः आख्यातबोध्ये एव कर्तरि अन्वयः । एकपदोपात्तत्वात् । एवञ्च न कुत्रापि आख्यातार्थसङ्ख्यायाः प्रथमान्तार्थे अन्वयः ।

अपि च नैय्यायिकोक्तकार्यकारणभावः न सम्भवति । तथाहि – (आख्यातार्थसङ्ख्याभावनोभयसाधारण्येन) "कालाद्यतिरिक्तआख्यातार्थनिष्ठप्रकारतानिरूपितविशेष्यतासम्बन्धेन आख्यातपदजन्यशाब्दबुद्धित्वावच्छिन्नं प्रति प्रथमान्तनामपदजन्यान्याविशेषणीभूतार्थविशेष्यकोपस्थितिः विशेष्यतासम्बन्धेन कारणम्" इति ।

परन्तु इदमयुक्तम् । "चैत्रो न पचति" इत्यत्र व्यभिचारात् । तथाहि – अत्र बोधः एवं वर्णितः । पाकानुकूलकृत्यभाववान् एकत्वविशिष्टश्चैत्रः इति । अत्र नञर्थः अभावः कृतिविशेष्यः, सङ्ख्याविशेष्यश्च प्रथमान्तार्थः इति आख्यातार्थसङ्ख्याभावनोभयसाधारण्येन एकविशेष्यत्वाभावात् पूर्वोक्तकार्यकारणभावस्य अयुक्तता ।

न च कार्यकारणभावः परिष्क्रियते । तथाहि – कालादिव्यतिरिक्तनिपातासमभिव्याहृत आख्यातार्थनिष्ठप्रकारतानिरूपितविशेष्यतासम्बन्धेन आख्यातपदजन्यशाब्दबुद्धित्वावच्छिन्नं प्रति प्रथमान्तनामपदजन्यान्याविशेषणीभूतार्थविशेष्यकोपस्थितिः विशेष्यतासम्बन्धेन कारणमिति ।

तथा च – "चैत्रो न पचति" इत्येतत् नञ्समभिव्याहृताख्यातस्थलमिति अत्र प्रथमान्तार्थस्य भावना- विशेष्यत्वाभावेऽपि न क्षतिः इति वाच्यम् ।

उच्यते – एवं सति निपातसमभिव्याहृताख्यातार्थसङ्ख्यायाः प्रथमान्तार्थेऽन्वयो न स्यात् । यतः तत्स्थलीयसङ्ख्याबोधस्य प्रथमान्तपदजन्योप-

स्थितिकार्यतावच्छेदकत्वानाक्रान्तत्वात् । तथाहि – प्रथमान्तपदजन्योपस्थितिकार्यतावच्छेदकं च निपातासमभिव्याहृतकालादिव्यतिरिक्त-आख्यातार्थनिष्ठप्रकारतानिरूपितविशेष्यतासम्बन्धेन आख्यातपदजन्यशाब्द-बुद्धित्वम् । तच्च निपातसमभिव्याहृताख्यातपदजन्यशाब्दबुद्धौ नास्तीति सामग्रीविरहात् न आख्यातार्थसङ्ख्यायाः एतादृशस्थले प्रथमान्तार्थे अन्वयः सम्भवति ।

परिहारः – कार्यकारणभावद्वयं प्रकल्प्य दोषः परिह्रियते । तथाहि –

(१) निपातसमभिव्याहृत-आख्यातार्थसङ्ख्यानिष्ठप्रकारतानिरूपितविशेष्यतासम्बन्धेन शाब्दबोधं प्रति प्रथमान्तपदजन्योपस्थितिः कारणम् ।

(२) निपातसमभिव्याहृताख्यातार्थभावनाप्रकारतानिरूपितविशेष्यता-सम्बन्धेन शाब्दबोधं प्रति निपातजन्योपस्थितिः कारणम् । एवं सति प्रथमान्तार्थस्य सङ्ख्याविशेष्यत्वम् । नञर्थाभावस्य च भावनाविशेष्यत्वं युज्यते ।

परन्त्वेवं स्वीकारे अनेककार्यकारणभावकल्पनापत्त्या महद्गौरवम् ।

अपि च सर्वत्र निपातसमभिव्याहृतस्थले अस्य प्रकारस्य असम्भवोऽपि । यथा “चैत्र एव पचति” इत्यत्र निपातसमभिव्याहृतस्थले आख्यातार्थ-सङ्ख्याभावनयोरुभयोः प्रथमान्तार्थे चैत्रे एवान्वयः स्वीक्रियते । एवञ्च तत्त-स्थलानुरोधेन दोषपरिहाराय विलक्षणकार्यकारणभावकल्पनस्यावश्यकत्वेन अनेककार्यकारणभावकल्पनात् महद्गौरवमिति नैय्यायिकमताक्षेपः न सङ्गच्छते ।

मीमांसकमते तु महल्लाघवम् । तथाहि – नामार्थभिन्नः सुबर्थलिङ्गस-ङ्ख्याद् व्यतिरिक्तः सर्वोप्याख्यातार्थः भावनातिरिक्तः भावनायामेवान्वेति । समानपदोपात्तत्वात् । इति मीमांसकसिद्धान्तः ।

## नैय्यायिकमते दोषान्तरोद्भावनम्
## अवान्तरशङ्कापरिहारक्रमेण समाधानञ्च

अपि च नैय्यायिकमते कालाद्यतिरिक्ताख्यातार्थस्य अन्वयः अन्याविशेषणीभूतप्रथमान्तपदार्थे इष्यते । तच्चायुक्तम् । "चैत्र एव पचति" इत्यत्र व्यभिचारात् । अत्र चैत्रे प्रथमान्तपदार्थे एव आख्यातार्थसङ्ख्यायाः भावनायाश्च अन्वयः दर्शितः । चैत्रः यद्यपि प्रथमान्तपदार्थः परन्तु नान्याविशेषणीभूतः, अपि तु अन्यविशेषणीभूत एव । तथाहि – एवकारार्थः अन्ययोगव्यवच्छेदः । तत्र एवकारार्थैकदेशे भेदे प्रतियोगितासम्बन्धेन चैत्रस्य विशेषणत्वम् । तथा च बोधः – चैत्रनिष्ठप्रतियोगितानिरूपकभेदनिरूपित-अनुयोगितावान् इति अन्यपदार्थः । इदं च अन्ययोगव्यवच्छेदे इत्येवकारार्थे अन्यपदार्थनिरूपणमिति ज्ञेयम् ।

आक्षेपः – चैत्रस्यान्याविशेषणीभूतत्वमस्त्येव । यतोऽत्र विवक्षितमन्याविशेषणत्वं नाम इदम् – विशेष्यत्वाभावविशिष्टविशेषणत्वाभाववत्त्वरूपम् । प्रकृते च चैत्रे विशेषणत्वविशेष्यत्वयोरुभयोरपि सत्वेन उभयाभावप्रयुक्तः विशिष्टाभावः वर्तते इति अन्याविशेषणत्वमस्त्येव । तथाहि – अस्माद्वाक्याद् अयं बोधः – चैत्रः पाकानुकूलकृतिमान् चैत्रान्यः पाकानुकूलकृत्यभाववान् इति । अत्र चैत्रस्य विशेष्यत्वं विशेषणत्वं च स्पष्टम् । अतः अन्याविशेषणीभूतप्रथमान्तपदार्थे कालाद्यतिरिक्ताख्यातार्थान्वयः युक्त एव ।

परिहारः – अथापि वाक्यभेदः । मुख्यविशेष्यस्य भेदात् । एकत्र चैत्रः विशेष्यः । अपरत्र तदन्यः विशेष्यः । एवञ्च एकमुख्यविशेष्यकबोधजनकत्वाभावात् न एकवाक्यत्वम् । ततश्च भिन्नवाक्यत्वम् । स च दोषः ।

किञ्च यत्र चैत्रः पचन्नस्ति मैत्रश्च अपचन्नस्ति तत्र कीदृशौ चैत्रमैत्रौ इति

प्रश्ने कृते चैत्र एव पचतीति उत्तरम् आपद्येत । न च चैत्रमैत्रौ कीदृशौ? इति प्रश्नवाक्यात् मैत्रस्य मैत्रत्वेन बोधाभावादेव एवमुत्तरं दत्तम् इति तु वक्तुं शक्यते इति वाच्यम् । यतः कीदृशौ चैत्रतदन्यौ ? इति प्रश्ने सत्यपि "चैत्र एव पचति" इत्युत्तरं स्यात् । अत्र तु अन्यत्वेन मैत्रस्य भानमस्त्येव । अतः नोक्तपूर्वापत्तिः ।

अपि च "ओदनं पचति" इति प्रयोगे अर्थात् यत्र प्रथमान्तपदासमभिव्याहृतस्थलं तत्र कथं प्रथमान्तार्थमुख्यविशेष्यकबोधः? न च प्रथमान्त- पदमध्याह्रियते । तदेवं कार्यकारणभावः – भावनाप्रकारकबोधत्वावच्छिन्नं प्रत्येव आख्यातपदज्ञानं कारणमिति वाच्यम् । भावनाप्रकारकबोधस्य शपथैकनिर्णेयत्वात् तादृशकार्यकारणभावकल्पनस्यानुचितत्वात् ।

एवं सत्यपि कार्यकारणभावे दोषः । "चैत्रेण सुप्यते" इति भावाख्यातस्थले प्रथमान्तपदाध्याहारापत्तिरिति । न चैवं परिहारः अत्रोच्यते येन एवमतिप्रसङ्गपरिहारः स्यात्, तथाहि – भावनाप्रकारकबोधं प्रति भावाख्यातभिन्नाख्यातपदज्ञानं कारणमिति । एवञ्च प्रकृते भावाख्यातस्थलत्वात् कारणाभावात् कार्याभावः । अतः तत्र आख्यातार्थविशेष्यक एव बोधः । अथापि कल्पनागौरवं दुर्वारम् ।

अथ च प्रथमान्तार्थमुख्यविशेष्यकबोधः यदि स्वीक्रियते चैत्रः कीदृशः? इति प्रश्नस्य "चैत्रः पचति" इति उत्तरं स्यात् । यतः उत्तरवाक्येन पाकभावनाप्रकारकः चैत्रविशेष्यकश्च बोधः जायते ।

आक्षेपः – भावनाविशेष्यकबोधपक्षेपि एतादृशी आपत्तिरस्त्येव । तथा हि – "चैत्रः पचति" इति वाक्यं कीदृशी कृतिरिति प्रश्नस्योत्तरं स्यात् । यतः अनेन वाक्येन चैत्रकर्तृकपाककृतेर्बोधः भवति ।

समाधानम् – अत्र कीदृशी कृतिरिति प्रश्नः स्त्रीलिङ्गविशिष्टकृतिविषयकः । अतः तादृशमेव अर्थात् स्त्रीलिङ्गविशिष्टकृतिबोधकपदघटितमेव उत्तरवाक्यं स्यात् । चैत्रः पचति इति तु नोत्तरवाक्यं भवितुमर्हति । अत्राख्यातबोध्यमानायाः कृतेः लिङ्गानन्वयित्वात् ।

अपि च एवं सति प्रथमान्तविशेष्यकबोधपक्षे चैत्रः कीदृशः? इति प्रश्नस्य "चैत्रः पचति" इत्युत्तरं स्यादेव । यतः चैत्रः कीदृशः? इति प्रश्नः लिङ्गसङ्ख्याविशिष्टचैत्रविषयकः । तदनुगुणतया "चैत्रः पचति" इति वाक्यमपि तादृशलिङ्गसङ्ख्याविशिष्टचैत्रपदघटितमेवेति उत्तरवाक्यत्वं तस्य स्यात् । अतः आख्यातार्थभावनाप्रकारकप्रथमान्तार्थमुख्यविशेष्यकबोधः न युक्तः ।

एवमेव आख्यातार्थसङ्ख्यायाः अन्वयः भावनायामेव सामानाधिकरण्यसम्बन्धेन । एवं कालस्य च आधेयतासम्बन्धेन भावनायामन्वयः इति बोध्यम् ।

घटो नश्यतीत्यादिस्थले निरूढलक्षणया आख्यातपदोपस्थापितं यत्प्रतियोगित्वं तत्र (भावनायामिति यावत्) लट्वाच्यः वर्तमानकालः स्ववृत्त्युत्पत्तिकनाशनिरूपितसम्बन्धेनान्वेति । न तु स्ववृत्तिनाशनिरूपितत्वसम्बन्धेन । एवं सम्बन्धभेदे सत्यपि तत्तत्स्थले कालरूपार्थस्य तु सर्वत्र भावनायामेवान्वयः ।

## आख्यातस्य कर्तरिकर्मणि च निरूढलक्षणा, समन्वयप्रकारश्च

कर्त्राख्यातस्थले कर्तरि निरूढलक्षणा आवश्यकी । एवं कर्माख्यातस्थले कर्मणि । तथाहि – पचतीति यदा श्रूयते तदा पाककर्ता एको न वा इति संशयः नोदेति । उदेति च कः पाककर्ता इति जिज्ञासा । एतदुभयं पच-

तीत्यनेन कर्तृबोधं विना नोपपन्नमिति उभयत्र बोधनिर्वाहाय लक्षणास्वीकारः आवश्यकः ।

एवं सति 'लः कर्मणि च भावे चाकर्मकेभ्यः' इति कर्तरि लकारविधायक-मनुशासनमपि युज्यते ।

अपि च किं नाम कर्तृत्वमिति विचारे अखण्डो धर्म एव कर्तृत्वम् । न तु कृत्याश्रयत्वरूपम् । अत एव अन्यदपि सङ्गतं भवति । दम्पत्त्योः कर्तृत्वं व्यासज्यवृत्तीति वर्तते सिद्धान्तः । यदि कर्तृत्वस्य नाखण्डरूपधर्मत्वं तदा कर्तृत्वस्य व्यासज्यवृत्तित्वं न स्यात् । व्यासज्यवृत्तित्वं च विभिन्नेषु पदार्थेषु आसज्य सम्बन्ध्य एकस्य वृत्तित्वमिति अर्थः । अथवा एकत्वानवच्छिन्नप-र्याप्तिप्रतियोगित्वमिति यावदित्यर्थः ।

प्रकृते च कर्तृत्वं विभिन्नेषु पदार्थेषु पतिपत्न्योः वृत्ति । तच्च कर्तृत्वं यदि कृत्याश्रयत्वरूपं तर्हि पतिनिष्ठस्य पत्नीनिष्ठस्य च भेदात् व्यासज्यवृत्तित्वं कर्तृत्वस्य न स्यात् । एकैकमात्रवृत्तित्वात् कर्तृत्वस्य । एकैकमात्रवृत्तेः एक-त्वस्य व्यासज्यवृत्तित्वादर्शनात् अपि तु द्वित्वादेः अनेकनिष्ठस्यैकस्यैव व्यास-ज्यवृत्तित्वदर्शनादिति भावः । एवं रीत्या आख्यातलक्ष्यः कर्तापि भावनाया-मेवान्वेति । तत्र च सम्बन्धः स्वनिष्ठकर्तृतानिरूपकत्वरूपः ।

एवं पचतीतिस्थले धात्वर्थः पाकः; तस्य च कर्मतासम्बन्धेन भावानाया-मन्वयः। न तु तार्किकोक्तरीत्या जनकतासम्बन्धेन तथा विवरणादर्शनात् । विव्रियमाणवाक्यस्य विवरणापेक्षया किल अर्थवर्णनमुचितम् । अत्रेदं विवर-णवाक्यम् – 'पाकं करोति' इति । अत्र पाकस्य धात्वर्थस्य कर्मत्वं विद्यते ।

एवम् "ओदनं पचति" इत्यत्र पाकस्य न कर्मत्वेनान्वयः। ओदनस्य कर्मत्वेनान्वितत्वात् । अपि तु "पाकेन ओदनं करोति" इति विवरणात् कर-णत्वेनैव भावनायामन्वयः।

न च पाकं प्रति कृतेः कारणत्वं न तु कृतिं प्रति पाकस्येति कथं पाकस्य भावनायां करणत्वेनान्वयः? इति शङ्क्यम् । पाकस्य भावनायां स्वनिष्ठकर-णतानिरूपकओदनोद्देश्यकत्वसम्बन्धेनैवान्वयस्वीकारात् । अत्र करणत्वं घटकमिति तथा व्यवहारमात्रम् । आहृत्य धात्वर्थस्य यथायथं कर्मत्वकरण-त्वादिसम्बन्धेन भावनायामन्वयः ।

## मीमांसकमते तिङन्तप्रयोगपरिशीलनम्

"चैत्रः ओदनं पचति" इति प्रयोगः । अत्र एवं बोधः – "पचति" इत्यनेन वर्तमानकालिकी भावना इति बोधः भवति । सा च विशेषणचतुष्टयो-पेता । चैत्रकर्तृका इति प्रथमा । सामानाधिकरण्यसम्बन्धेन एकत्वविशिष्टं यत् ओदनवृत्तिकर्मत्वं स्वनिरूपकपाकानुकूलत्वसम्बन्धेन तद्विशिष्टा इति द्वितीया । स्वनिष्ठकरणतानिरूपकओदनोद्देश्यकत्वसम्बन्धेन पाकविशिष्टा इति तृतीया । स्वाश्रयओदनवृत्तिविक्लित्तिजनकपाका- नुकूलसम्बन्धेन एक-त्वविशिष्टा इति चतुर्थी ।

अयमस्यार्थः – या कृतिः भावनापरपर्याया तस्यां कर्ता भवति चैत्रः । अर्थात् चैत्रनिष्ठा सा इति प्रथमविशेषणस्यार्थः ।

द्वितीयस्य चायम् – ओदने अस्ति धर्मद्वयम् एकत्वं कर्मत्वं च । तत्र कर्मत्वं च धात्वर्तपाकेन निरूप्यम् अर्थात् ज्ञाप्यम् । धात्वर्थपाकस्य च वैशि-ष्ट्यं भावनायाम् । तच्च वैशिष्ट्यं जनकतारूपम् । अर्थात् चैत्रनिष्ठकृत्या पाको जन्यते ।

तृतीयस्य चायम् – पाके च विद्यते करणत्वं कृतिं प्रति । अध्ययनेन वसतीत्यादौ यथा अध्ययनस्य । अथ च ओदनं भवति उद्देश्यम् । तच्च पाके विद्यमानस्य करणत्वस्य ज्ञापकम् ।

चतुर्थस्य चायम् – ओदने अस्ति एकत्वम्, विक्लित्तिश्च । विक्लित्तिश्च मृदुविशदत्वरूपा । तस्याः जनकः पाकः । तदनुकूलेयं चैत्रकर्तृकभावना ।

"चैत्रेण सुप्यते" इति भावाख्यातस्थले अयं बोधः – चैत्रकर्तृका एकत्वविशिष्टस्वापवती स्वापभावना इति । अत्र भावाख्यातेनापि भावनाऽभिधीयते । तथा विवरणदर्शनात् । विवरणं च चैत्रेण स्वापः क्रियत इति । धात्वर्थस्वापेऽपि आख्यातार्थः विद्यते । 'लः कर्मणि च भावे चाकर्मकेभ्यः' इति भावेऽपि लकारस्मरणात् । तस्य च भावानायामन्वयः । अत्र साधुत्वार्थः द्वितीयस्वापबोधः ।

"चैत्रो न पचति" इत्यत्र चैत्रकर्तृका पाकभावना अभावप्रतियोगिनीति बोधः । अत्रापि नञर्थाभावः स्वनिष्ठप्रतियोगितानिरूपकत्वसम्बन्धेन भावनायामन्वयः । न च यत्र चैत्रः पचन्नस्ति तत्र न पचतीति प्रयोगापत्तिः । यतः चैत्रकर्तृकपाकभावना चैत्र निष्ठैव, नत्वन्यनिष्ठा इति सा भवति अन्यनिष्ठाभावप्रतियोगिनी ।

अत्र परिहारः – नञा लक्षणया अन्यनिष्ठाभावप्रतियोगित्वमात्रं न बोध्यते । अपि तु चैत्रनिष्ठाभावः । तथा च बोधोऽयम् । चैत्रकर्तृका पाकभावना चैत्रनिष्ठाभावप्रतियोगिनीति ।

अथवा नञ्समभिव्याहृतस्थले नञ्पदस्य तात्पर्यग्राहकत्वं स्वीकृत्य आख्यातस्य कृत्यभावे लक्षणा वक्तव्या । प्रथमान्तपदार्थश्च स्वनिरूपिताधेयतासम्बन्धेन अभावे अन्वेति । एवञ्च बोधः - "चैत्रनिष्ठः वर्तमानपाकानुकूलः कृत्यभावः" इति ।

"चैत्र एव पचति" इत्यत्रायं बोधः –चैत्रवृत्तिः चैत्रान्यवृत्तिश्च एककर्तृका पाकभावना इति ।

'नीलो घटः' इत्यत्र क्रियापदाभावात् कात्यायनस्मरणात् अस्तीतिपदम-ध्याहार्यम् । अत्राख्यातार्थः आश्रयत्वम् । आश्रयत्वे च भावनापरपर्याये नी-लपदार्थस्य घटपदार्थस्य च स्वकर्तृकस्थितिनिरूपितत्वसम्बन्धेनान्वयः । अभेदबोधश्च नीलघटयोः मानसः न तु शाब्दः ।

यदि च अभेदबोधोऽपि शाब्दः तदा एवमन्वयः – नीलस्य स्वाभिन्नघट-कर्तृकस्थितिनिरूपितत्वसम्बन्धेन भावनायामन्वयः । अत्र संसर्गकोटिप्रविष्ट-तया अभेदः भासते । तथा च बोधः – "नीलविशिष्टा घटविशिष्टा च स्थि-तिभावना" इति ।

"घटः पटो न" इत्यत्रापि कात्यायनस्मरणात् "भवति" इतिपदमध्या-हार्यम् । स्मृतिस्थास्तिपदस्य उपलक्षणपरत्वस्वीकारात् । अत्र पटपदं पट-निरूपितान्योन्याभाववदर्थकम् । नञ्पदं च तात्पर्यग्राहकम् । भवतीत्यत्र आख्यातार्थश्च भावनारूपमाश्रयत्वम् । तत्र च पटपदार्थस्य घटपदार्थस्य च यथायथं स्वाभिन्नघटकर्तृकस्थितिनिरूपितत्वसम्बन्धेन स्वनिष्ठकर्तृत्वघटितस-म्बन्धेन च तत्रैवान्वयः ।

एवञ्च 'तद्भूतानां क्रियार्थेन समाम्नायः' (पू.सू. १-१-२४) इति सूत्रयन् महर्षिः जैमिनिः भावनामुख्यविशेष्यकबोधमेव मनुते । इत्ययमेव युक्तः नत्व-न्यः इति मीमांसकसिद्धान्तः ।

## अलङ्कारशास्त्रे आख्यातवादः

आलङ्कारिकाश्च यथायथं प्रथमान्तार्थमुख्यविशेष्यकबोधं, धात्वर्थमुख्य-विशेष्यकबोधम्, आख्यातार्थमुख्यविशेष्यकबोधं च स्वीकुर्वन्ति । कचित्सति बाधके त्यजन्ति च ।

अतः आख्यातार्थः क्वचित् 'कृति'रिति स्वीक्रियते; क्वचित् 'कर्ता' इत्यादिरीत्या स्वीक्रियते । एवं रीत्या रसगङ्गाधरादिग्रन्थेषु दृश्यते ।

## पतञ्जलिवचनम् आलङ्कारिकैरप्यादृतम्

दण्डिमम्मटभट्टादयश्च उत्प्रेक्षालङ्कारं निरूपयितुं प्रवृत्ताः धात्वर्थमुख्यवि-शेष्यकबोधम्, आख्यातार्थः कर्ता इति च विषयमङ्गीकुर्वन्ति इति ज्ञायते ।

तथाहि – अस्ति च सूत्रम् 'धातोः कर्मणः समानकर्तृकादिच्छायां वा' (पा.सू. ३-१-८) । अत्र भाष्ये अस्ति वचनम् – "न वै तिङन्तेनोपमान-मस्ति" इति । एतद्वचनादरणेनैव दण्डिमम्मटभट्टादयः धात्वर्थमुख्यविशेष्य-कबोधम् आख्यातार्थभूतं कर्तारं च अङ्गीकुर्वन्तीति ज्ञायते ।

अत्र विवरणम् – इदमस्ति तत्र प्रकरणम् । इच्छायां पूर्वोक्तेन सूत्रेण धातोः सन्प्रत्ययः विधीयते । यथा 'पिपतिषति - पतितुमिच्छती'ति अस्य विग्रहः । अत्र पत्लृधातोः इच्छायां सनुप्रत्ययः विहितः । परन्तु 'कूलं पिप-तिषति' इत्यादयः प्रयोगाः कथं युज्यन्ते? इति प्रश्नस्तु तिष्ठति । इच्छायाः चेतनधर्मत्वात्, कूलस्य च अचेनत्वात् 'कूलं पतितुमिच्छती'ति कथं विवरणं सङ्गच्छते इति। तत्र वार्तिककारैः परिहारः अन्विष्टः 'उपमानाद् वा सिद्ध-मि'ति । यथा चेतने 'लुलुठिषते, पिपतिषति' इत्यादयः प्रयोगाः तथा तत्सा-दृश्यवशात् अचेतनेपि 'अश्मा लुलुठिषते, कूलं पिपतिषति' इत्यादयः प्रयोगाः भवितुमर्हन्ति ।

अत्र भाष्यकारः 'उपमानाद्वा सिद्धम्' इति वार्तिकं प्रत्याख्यातवान् । प्रत्याख्यानं च प्रकारान्तरेण सिद्धस्यार्थस्य उपायान्तरेण साधनम्, न तु प्रका-रान्तरेण सिद्धस्यार्थस्य निराकरणम् । प्रकृते अस्य वार्तिकस्याभावेपि 'पिप-

तिषति' इत्यादिषु सन्प्रत्ययः भवितुं शक्यते । तथा हि – 'शब्दशक्तेः स्वभावात् सिद्धम्' इति । तत्रेदं वाक्यम् – "न वै तिङन्तेनोपमानमस्ति" इति । वाक्यस्यास्यार्थः –तिङन्तेन = तदभिहितक्रियया उपमानं = सादृश्यं नास्ति वै = नास्त्येव इत्यर्थः । अत्र कैय्यटे एवं विवरणं दत्तम् । उपमानोपमेयभावः तत्रैवाभ्युपगम्यते, यत्र 'इदं, तदि'ति परामर्शविषयवस्तु वर्तते । प्रकृते च तिङन्ताभिहितायाः क्रियायाः उपमानत्वं नास्ति । सिद्धरूपत्वाभावात् अपि तु साध्यैकस्वभावत्वात् । अयं भावः —– "पचति पाकः" इत्यनयोः पच्धातुघटितत्वेपि अस्ति विशेषः । "पाकः" इत्युक्ते अत्र पच्धातुना यः विक्लित्त्यनुकूलव्यापारः अभिधीयते स सिद्धः इत्यर्थः । "पचति" इत्यत्र तु पच्धातुना या क्रिया प्रतिपाद्यते, सा तु न सिद्धा, अपि तु साध्या ।

अत्रैवं व्याप्तिः – 'यो यः सिद्धः स स एव सर्वनामपरामर्शयोग्यः' । यो यः सर्वनामपरामर्शयोग्यः स सर्वोपि उपमानत्ववान्' इति च । उदाहरणम् – 'एष पाकः, स पाकः' इत्यादौ पाकस्य सिद्धत्वेन सर्वनामपरामर्श- योग्यत्वं तस्मादेव उपमानत्वं च । यथा 'चैत्रस्य पाक इव भवति मैत्रस्य' ।

प्रकृते 'चन्द्र इव मुखम्', 'रोदनमिव गानम्' इत्यादौ चन्द्ररोदनयोः उपमानत्वमस्ति । यतः सर्वनामपरामर्शयोग्यत्वमस्ति । तच्च तयोः सिद्धत्वादस्तीति ज्ञेयम् ।

अत्र कैय्यटः 'रोदिति इव गायति, नृत्यति इव गच्छति' इत्यादिषु स्थलेषु उत्प्रेक्षा एव, न तु उपमानमित्याह – "साध्यत्वात् सर्वनामपरामर्शायोग्यत्वम् अत एव नोपमानत्वम् अपि तु उत्प्रेक्षा" इति ।

अमुमेव वादम् अङ्गीकुर्वन्ति मम्मटादयः । तथाहि –

**लिम्पतीव तमोङ्गानि वर्षतीवाञ्जनं नभः ।**
**असत्पुरुषसेवेव दृष्टिर्विफलतां गता ॥**

इति श्लोके एवमस्ति ग्रन्थपङ्क्तयः – "तमोव्यापनस्य, नभःप्रभृतिभूपर्यन्त-सकलवस्तुसान्द्रमलिनीकरणेन निमित्तेन तमःकर्तृकलेपनतादात्म्योत्प्रेक्षा । नभःकर्तृकाञ्जनवर्षणतादात्म्योत्प्रेक्षा च अनुक्तविषयात् स्वरूपोत्प्रेक्षा । उभयत्रापि विषयभूततमोव्यापनस्यानुपादानात्" - इति । न तु व्यापनेन निमित्तेन, भूपर्यन्तं व्याप्तत्वेन निमित्तेन च इति उत्प्रेक्षाद्वयमिति स्वीचक्रुः ।

अनेन ज्ञायते मम्मटादिभिः उपमानत्ववर्वणनमकृत्वा उत्प्रेक्षावर्णनकरणात् महाभाष्यवचने आदरः कृतः इति । तदिदं वाक्यम् – "न वै तिङन्तेन उपमानमस्ति" इति ।

किञ्च दण्डी एवमाह –

**लिम्पतीव तमोङ्गानि वर्षतीवाञ्जनं नभः ।**
**इतीदमपि भूयिष्ठम् उत्प्रेक्षालक्षणान्वितम् ॥**

**केषाञ्चिदुपमा भ्रान्तिः इवश्रुत्येह जायते ।**
**नोपमानं तिङन्तेनेत्यतिक्रम्याप्तभाषितम् ॥** – इति ।

अत्र "भ्रान्तिः इह जायते", 'इवश्रुत्या', एवम् "आप्तभाषितम्" इत्यादिपदस्वारस्येन महाभाष्यवचने आदरः कृतः इति ज्ञायते । धात्वर्थमुख्यविशेष्यकाङ्गीकारश्च ध्वन्यते ।

इदमत्र विवरणम् – 'रोदितीव गायति देवदत्तः' इति वाक्यम् । अस्यार्थः 'देवदत्तकर्तृकरोदनप्रकारकसम्भावनाविषयः गानमि'ति । न तु देवदत्तस्य गानं रोदनमिव इत्यर्थः । इदमस्त्यत्राकूतम् – 'इव' इति पदार्थः उपमानं = सादृश्यम् । उपमानत्वं च 'इदं, तदि'ति परामर्शविषयस्यैव । तच्च परामर्शत्वं सिद्धरूपवस्तुनः, न तु साध्यरूपवस्तुनः । प्रकृते च 'रोदिति इव' इति स्थले

तिङन्तसत्वात्, तदभिहितक्रियायाश्च साध्यस्वभावतया न ‘इदं, तदि’ति परामर्शयोग्यता, अतश्च नोपमानत्वम् इति 'न वै तिङन्तेनोपमानमस्ति' इति स्वीकारेण पूर्वोक्तः बोधः वर्णितः । तर्हीदं किम्? इत्यत्रेदमुत्तरम् –अध्यारोपः अर्थादुत्प्रेक्षा । एवं तिङन्तेनोपमानत्वं नास्तीति प्रवर्ण्य उत्प्रेक्षायाः स्वीकारेण धात्वर्थमुख्यविशेष्यकबोध एवाङ्गीक्रियते इति ज्ञायते । तत्कथम्? इत्युक्ते एवम् – यदि भाष्यकारस्य ‘रोदितीव गायति देवदत्तः’ इत्यादिस्थलेषु प्रथमा-न्तार्थमुख्यविशेष्यकबोधः अभिप्रेतः, तर्हि रोदनकर्तुः उपमानस्य स्वत एव सिद्धत्वेन “न वै तिङन्तेनोपमानमस्ति” इति न व्यवहरेत् । यतो हि तदानीं बोधः । ‘रोदिती’त्यस्य रोदनानुकूलकृतिमानित्यर्थः । ‘गायती’त्यस्य गानानुकूलकृतिमान् इत्यर्थः । एवञ्च “गानानुकूलकृतिमान् रोदनानुकूल-कृतिमानिव” इत्युपमानत्वं स्यात् । अतः 'न वै तिङन्तेन उपमानमस्ति' इति वाक्यात् तिङन्तेन प्रतिपाद्यमानेषु नैकार्थेषु भावकालकारकसङ्ख्यादिषु मुख्यं भवति भावः इति ध्वन्यते । तद्धि 'भावप्रधानमाख्यातम्' इति यास्कमुनिवच-नम् । इत्येवमालङ्कारिकैरपि पतञ्जलिवचनमादृतम् ।

## रसगङ्गाधरे निरूपितः शाब्दबोधः

रसगङ्गाधरे बहुत्र नैय्यायिकादिसमयं स्वीकृत्य शाब्दबोधः वर्णितः । तदत्र द्वितीयानने उपमायां शाब्दबोधः कथम्? इत्यत्र इदं वर्णनं दृश्यते —

यथा उपमावाक्यं –

(१) मुखं कमलमिव सुन्दरम् (२) कमलतुल्यं सुन्दरम् (३) कमलवत् सुन्दरम् (४) कमलं यथा सुन्दरम् (५) कमलेन तुल्यं सुन्दरम् ।

एवमस्ति वाक्यपञ्चकम् । अत्र स्पष्टमाख्यातपदं नास्ति । अथापि

बोधस्तु वर्ण्यते आलङ्कारिकैः – "कमलनिरूपितसादृश्यप्रयोजकसौन्दर्यवद-भिन्नं मुखम्" इति ।

अत्रैव प्रसङ्गे अस्मिन्स्थले, अर्थाद् "अरविन्दसुन्दरमुखम्" इत्यत्र मीमांसकमते कथं शाब्दबोधः? इत्यपि जगन्नाथेन वर्णितः । स च तस्य सम्मतः इति ज्ञायते । यतो हि सादृश्यं मीमांसकैरतिरिक्तः पदार्थः इति स्वी-क्रियते । नैय्यायिकैश्च सादृश्यस्य पदार्थान्तरत्वं न स्वीक्रियते, अपि तु सा-धारणधर्मरूपत्वम् ।

तदत्र रसगङ्गाधरे – "अथात्र सादृश्यस्य पदार्थान्तरत्वे बोधः विचार्यते । 'अरविन्दसुन्दरम्' इत्यत्र अरविन्दनिरूपितसादृश्यप्रयोजकं लक्ष्यते । तच्च सुन्दरपदार्थैकदेशेन सौन्दर्येण, अभेदसंसर्गेणान्वेति । तेन "अरविन्दनिरू-पितसादृश्यप्रयोजकाभिन्नसौन्दर्यवदभिन्नम् इति धीः" इति ।

अत्र रसगङ्गाधरे – "समासस्यैव विशिष्टार्थे शक्तिः इत्येके" इति ।

अत्र वैय्याकरणाः किं वदन्ति? इत्यत्रोक्तं – पदशक्त्यतिरिक्ततया समा-सशक्तेः अङ्गीकारात् अखण्डार्थः इति। तथाहि "अरविन्दनिरूपितसादृश्य-प्रयोजकसौन्दर्यवत्" इति ।

"अरविन्दपदमेव लक्षणया सर्वार्थबोधकं, सुन्दरपदं तु तात्पर्यग्राहक-मिति अपरे" (रसगङ्गाधरे) ।

एतद्ग्रन्थोक्तरीत्या नैय्यायिकैः लक्षणापक्षं स्वीकृत्य, अरविन्दपदात् अर-विन्दनिरूपितसादृश्यप्रयोजकसौन्दर्यवत् इत्यर्थं स्वीकृत्य बोधः वर्ण्यते इति ज्ञेयम् ।

व्यस्तस्थले एवं बोधः वर्णितः – "अरविन्दमिव सुन्दरम्" इत्यत्र इव-पदार्थः सादृश्यम्, तत्रोपमानभूतस्य अरविन्दस्य निरूपितत्वसम्बन्धेनान्वयः ।

तथा च 'अरविन्दनिरूपितसादृश्यम्' इति बोधः । सादृश्यस्य च सुन्दर-पदार्थैकदेशे सौन्दर्ये प्रयोजकतासम्बन्धेनान्वयः । एवञ्च "अरविन्दनिरूपित-सादृश्यप्रयोजकं सौन्दर्यम्" इति । तस्याभेदेन मुखे अन्वयः इति "अरविन्द-निरूपितसादृश्यप्रयोजकसौन्दर्वयवदभिन्नं मुखम्" इति ।

"सौन्दर्येणारविन्दमिव भाति" इत्यत्र एवं बोधः – "सौन्दर्यप्रयोज्यार-विन्दनिरूपितसादृश्यप्रकारकधीविशेष्यं मुखम्" इति ।

अन्यत्र रसगङ्गाधरे – "अरविन्दवत् सुन्दरम्" इत्यत्र "तेन तुल्यमिति विहितस्य ...... 'अरविन्दमिव सुन्दरम्' इत्यत्र इव बोधः" इति । **अत्र व्याख्यायां** – 'वस्तुतस्तु क्रियायास्तुल्यत्वे एव "तेन तुल्यं क्रिया चेत् वतिः" इति वतिविधानात् "अरविन्दमिव सुन्दरम्" इत्यादिवत् कथं बोधः? इति चिन्त्यमिदम् । अत एव 'ब्राह्मणवदधीते' इत्यत्र ब्राह्मणकर्तृकाध्ययने ब्राह्म-णपदस्य लक्षणा इति महाभाष्यकारादयः' इति तत्र तत्र वैय्याकरणमतमादृतं दृश्यते ।

अरविन्दवत् सुन्दरं मुखमित्यत्र च भवतिक्रिया अध्याहार्या । .......... तथा च सुन्दरारविन्दभवनसदृशं सुन्दरं मुखभवनम् इति शाब्द-बोधे ............ व्यञ्जनया बुद्ध्यते । एवम् अरविन्दवन्मुखमित्यत्रापि अरविन्दभवनसदृशं मुखभवनम् इत्येवबोधो युक्तः इति बोध्यम् । इति रीत्या क्वचिद्धात्वर्थमुख्यविशेष्यक एव बोधः स्वीकरणीयः इति आख्यातपदमध्या-हृत्य दर्शितम् ।

(१) गज इव गच्छति - इत्यत्र बोधः – गजगमनसदृशगमनानुकूलकृ-तिमान् । गजगमनसदृशं यद्गमनं तदनुकूला या कृतिः तद्वान् इत्यर्थः ।

(२) 'मलय इव जगति पाण्डुः वल्मीक इव अदिधरणी धृतराष्ट्रः' –अत्र बोधः – मलयवल्मीकनिरूपितसादृश्यवदभिन्नौ पाण्डुधृतराष्ट्रौ इति ।

(३) 'अकस्मादुपनतः काकतालीयः चोरकर्तृकदेवदत्तवधः'– अत्र बोधः – तालपतनजन्यकाकवधनिरूपिताकस्मिकोपनतत्वप्रयुक्तसादृश्यवद्-भिन्नः चोरकर्तृको देवदत्तवधः। तालपतनजन्यः यः काकवधः तन्निरूपितं यत् आकस्मिकोनतत्वप्रयुक्तं सादृश्यं तद्वदभिन्नः चोरकर्तृकः देवदत्तवधः।

(४) 'अवनीपतिः मृधे पार्थसञ्चारं सञ्चरति' – अवनीपतिः मृधाधिकरणकपार्थनिरूपितसादृश्यप्रयोजकसञ्चरणानुकूलकृतिमान् ।

(५) 'चम्पककुसुमं यत्समं तन्नजानीमः' – चम्पककुसुमनिष्ठसादृश्यप्रतियोग्यस्मद्ज्ञानाविषयः ।

(६) 'तिलोत्तमीयन्ती मम मनो रमयति' – असौ आत्मकर्मकतिलोत्तमानिरूपितसादृश्यप्रयोजकमन्मनोरमणाभिन्नाचारानुकूलकृतिमती ।

(७) 'वनं गज इव गृहं देवदत्तो गच्छति' इत्यत्र एवं बोधः – वनकर्मकगमनानुकूलकृतिमत् गजसदृशः गृहकर्मकगमनानुकूलकृतिमान् देवदत्तः इति ।

(८) 'गज इव पुरुषो गच्छति', 'पुरुषः गज इव गच्छति' – इत्यनयोर्बोधः – गजनिरूपितसादृश्यवदभिन्नः पुरुषः गमनानुकूलकृतिमान् इति प्रथमवाक्ये, उत्तरवाक्ये च पुरुषः गजनिरूपितसादृश्यप्रयोजकगमनानुकूलकृतिमान् इति । अत्र तु उद्देश्यविधेयभागं व्यत्यस्य वर्णितः ।

एवम् अत्र दृष्टेषु वाक्येषु सर्वत्र **नैय्यायिकसम्मतः प्रथमान्तार्थमुख्यविशेष्यकबोधः** एव अङ्गीकृत इति ज्ञायते।

एवं नैय्यायिकमतमात्रं स्वीक्रियते इत्यपि न । तत्र तत्र रसगङ्गाधरे व्याकरणसम्मतेरपि युक्तित्वेन उपन्यासः कृतः । तथाहि –

"यदप्युक्तं रूपके सदृशलक्षणायाः फलम् ताद्रूप्यप्रत्ययो न युज्यते, तत्सदृश इति शब्दजबोधानन्तरमपि तथाप्रत्ययापत्तेरिति । तन्न । तत्सदृश इत्यत्र लक्षणायाः अभावेन ताद्रूप्यप्रत्ययस्य अपादानायोगात् । ताद्रूप्यप्रत्ययः लक्षणायां फलमिति प्राचां समयः । **महाभाष्यादिग्रन्थानाम् अस्मिन्नेवा-नुकूलत्वाच्च । नव्यनये तु तेषामाकुलीभावः स्यादिति दिक् ।"**

अपि च क्वचिन्न्यायमतम् एवमपि कटाक्षीक्रियते —– तथाहि – "ननु घटो न पश्यतीत्यत्र घटान्विताभावस्य दर्शने कर्मतासंसर्गेणान्वयवारणाय, धात्वर्थनिष्ठविशेष्यतानिरूपितप्रकारतासंसर्गेन शाब्दबोधं प्रति विशेष्यतया विभक्त्यर्थोपस्थितेः हेतुत्वम् । एवञ्च 'गज इव गच्छति', 'पिक इव रौति' इत्यादौ न इवाद्यर्थस्य सादृश्यस्य धात्वर्थेऽन्वयः सम्भवति । तस्मात् गजसा-दृश्यस्य गमनकर्तर्येवान्वयः स्वगमनादिसदृशगमनादिकर्तृत्वेन समानधर्मेण । **इत्थमेव च आख्यातवादशिरोमणिव्याख्यातृभिरपि सिद्धान्तितमिति चेत् नैवम्** । [१]गज इव गच्छतीत्यत्र सादृश्यस्य विधेयतया प्रतीतेरपलापा-पत्तेः । ..... तस्मात् गजनिरूपितसादृश्यप्रयोजक गमनाश्रयः इत्येव गज इव गच्छतीत्यत्र धीः। ...... इत्यलम् अप्रसक्तविचारेण ।" इति ।

**अत्र व्याख्याने** – वैय्याकरणनये तु क्रिययोरेव उपमानोपमेयभावः । गच्छतीत्यस्य च आवृत्त्या उभयत्रान्वयः । गजादिपदानां स्वकर्तृकक्रियायां लक्षणा वा इति दिक् - इत्युक्तम् ।

उदाहरणं नाम किमिति निरूपणावसरे श्लोकद्वयमुल्लिखितम् –

**अमितगुणोऽपि पदार्थः दोषेणैकेन निन्दितो भवति ।**
**निखिलरसायनराजः गन्धेनोग्रेण लशुन इव ॥**

---

(1) अत्र वर्णितः बोधः न्यायकौस्तुभकारेण महादेवपण्डितेन खण्डितः वर्तते ।

**यथा वा उपकारमेव कुरुते विपद्गतः सद्गुणोनितराम् ।**
**मूर्च्छां गतो मृतो वा निदर्शनं पारदोऽत्र रसः ॥**

अत्र रसगङ्गाधरे – “तत्र तावत् अमितगुणः इति पद्ये **क्रियाप्रधानमाख्यातमिति नये** अमितगुणपदार्थकर्तृकमेकदोषहेतुकं निन्दाविषयीभवनं निखिलरसायनराजलशुनकर्तृकोग्रगन्धहेतुकनिन्दाविषयीभवनावयवकम् इति धीः । **प्रथमान्तमुख्यविशेष्यकबोधवादिनां तु** उग्रगन्धहेतुकनिन्दाविषयीभवनाश्रयतादृशलशुनावयवकः तादृशपदार्थः एकदोषहेतुकनिन्दाविषयीभवनाश्रयः । ...... उपकारमेव इत्यत्र तु विपद्गताभिन्नः सद्गुणः उपकारानुकूलकृतिमानिति पूर्ववाक्यार्थः । अत्रास्मिन्नर्थे मूर्च्छां गतः मृतो वा पारदो निदर्शनमेकदेशः इति उत्तरवाक्यार्थे गुणः इति केषाञ्चित् (नैय्यायिकानाम्) । इतरेषां तु (वैय्याकरणानां) तादृशकर्तृकतादृशक्रिया(विपद्गताभिन्नसद्गुणकर्तृकोपकारकक्रिया) इति पूर्ववाक्यार्थे । तादृशः पारदः एकदेशः इति ।

अन्यत्र रसगङ्गाधरे – “अथ कथं गाम्भीर्येण समुद्रोऽयं सौन्दर्येण च मन्मथः इत्यत्र बोधः” इत्यारभ्य ‘शृणु’ इति **प्राचां मते** तथा अभेदसंसर्गेण अन्वयवादिनां मते बोधः वर्णितः । तथाहि गाम्भीर्यप्रयोज्यसमुद्रसादृश्यवदभिन्नोऽयं अथवा गाम्भीर्याभिन्नसमुद्रवृत्तिधर्मवदभिन्नोऽयमिति प्राचां मते ।

अथ च गाम्भीर्येणेत्यत्र तृतीयार्थः ज्ञानजन्यज्ञानप्रकारत्वम् । तथा ‘वह्निमान् धूमात्’ इत्यादौ दृष्टत्वात् । एवञ्च बोधः गाम्भीर्यज्ञानजन्यज्ञानप्रकारकसमुद्राभिन्नः इति ।

क्रियास्वरूपोत्प्रेक्षा यथा –

**कलिन्दजा नीरभरेर्धमग्नाः बकाः प्रकामं कृतभूरिशब्दाः ।**
**ध्वान्तेन वैरात् विनिगीर्यमाणाः क्रोशन्ति मन्ये शशिनः किशोराः ॥**

अत्र प्रथमान्तमुख्यविशेष्यकबोधवादिनाम् इत्युक्त्वा अन्ते बोधः वर्णितः "कलिन्दजा नीरार्धमग्नकृतभूरिशब्दोभयाभिन्नाः बकाः ध्वान्तनिगीर्यमाणशशिकिशोरोभयाभिन्नाः क्रोशनक्रियानुकूलव्यापारबद्धाः" इति ।

## लिम्पतीव तमोऽङ्गानि इत्यत्र किमस्ति रसगङ्गाधरे

"एवं लिम्पतीव तमोऽङ्गानि वर्षतीवाञ्जनं नभः (शूद्रकप्रणीतमृच्छकटिके प्रथमेऽङ्के पद्यम्) इत्यादौ कस्यापि पद्ये न प्रथमान्तार्थे कर्तरि लेपनकर्तृत्वादेरुत्प्रेक्षणम् । तस्य आख्यातार्थविशेषणत्वेन एकदेशत्वात् नापि लेपनादिकर्तुः अभेदेन तस्य क्रियाविशेषणत्वेनाप्राधान्यात्, किन्तु तमःकर्तृकम् अङ्गकर्मकं लेपनमुत्प्रेक्षते । तमः कर्तृकम् अञ्जनकर्मकं वर्षणं च । ...... अत एव "सम्भावनमथोत्प्रेक्षा प्रकृतस्य समेन यत्" इति लक्षणं विधायोक्तं व्यापनादि -लेपनादिरूपतया सम्भावितमिति मम्मटभट्टैः" ।

## भावप्रधानमाख्यातम् इति वचनस्य कोऽर्थः? रसगङ्गाधरे को वा आख्यातार्थः?

लिम्पतीव तमोऽङ्गानि इत्यत्रैव रसगङ्गाधरे – "लेपनादिकर्तृत्वं तमआदिविषयेषु उत्प्रेक्षते इत्येव युक्तम् । **अनुकूलव्यापारात्मकस्य कर्तृत्वस्यैवाख्यातार्थत्वात्** । तस्य च प्रथमान्ते विशेष्ये आश्रयतासंसर्गेणान्वयात् न दोषः । **भावप्रधानमाख्यातमित्यस्य भावः व्यापारः तदर्थकमाख्यातं तिङ्** इत्यर्थकरणात् न विरोधः । सत्त्वप्रधानानि नामानि इत्युत्तरवाक्यगतस्य प्रधानशब्दस्याभिधेयपरत्वात् । फलमात्रस्यापि धातोः आख्यातार्थव्यापारव्यधिकरणत्वसमानाधिकरणत्वाभ्याम् अर्थगताभ्यां सकर्मकाकर्मकत्वव्यवहा-

रः । ....... **शब्दानुवृत्तिपक्षस्वीकाराच्च कर्तरि कृत् इत्यत्र धर्मिपरस्यापि कर्तृग्रहणस्य लः कर्मणि च भावे चाकर्मकेभ्यः इत्यत्र धर्मपरतायामपि न दोषः ।**

**यद्वा आस्तां फलव्यापारौ धातोः, आश्रयश्च तिङोर्थः** । परन्तु देवदत्तः पचमानः इत्यादाविव "देवदत्तः पचति" इत्यादिष्वपि प्रथमान्तार्थ एव तिङर्थस्य अभेदेन विशेषणत्वमुक्तं न तु भेदेन । धात्वर्थभावनायां सर्वजनसिद्धस्योद्देश्यविधेयभावस्य भङ्गापत्तेः । सत्यां हि गतौ प्रत्ययार्थे प्रकृत्यर्थौ विशेषणम् इत्यस्य उत्सर्गस्याप्यनुग्रह एव न्यायः । **भावप्रधानमाख्यातमित्यस्य भावनार्थको धातुः** इत्यर्थकरणात् न विरोधः । **न च वैय्याकरणमतविरोधः दूषणमिति वाच्यम् । स्वतन्त्रत्वेनालङ्कारिकतन्त्रस्य तद्विरोधस्यादूषणत्वात् । प्रपञ्चयिष्यते चैतत् अधिकमुपरिष्टादिति प्रकृतमनुसरामः"** इति ।

"एवञ्च लिम्पतीव इत्यादौ भेदेनाभेदेन वा तिङर्थस्यैव प्रथमान्तार्थे एव उत्प्रेक्षणम्, न तु धात्वर्थस्य स्वनिगीरणे व्यापनादौ । सर्वजनसिद्धायाः इवार्थस्य विधेयतायाः अनुपपत्तेः । तमःकर्तृकं लेपनमिव इत्यस्मादपि उद्देश्यबोधकशून्यवाक्यात् उत्प्रेक्षाप्रतीत्यापत्तेश्च ।" इत्येवं रीत्या रसगङ्गाधरे 'भावप्रधानमाख्यातम्' इत्यादिवचनानाम् तत्तद्वाद्यभ्युपगतः अर्थः स्वसिद्धान्तानुगुणः वर्णितः । स्वस्य तन्त्रान्तरादूषकत्वं च स्वतन्त्रत्वादेव युज्यत इत्यपि उक्तम् इति ।

अपरत्र –

**कलिन्दगिरिनन्दिनी तटवनान्तरं भासयन्**
**सदा पथि गतागतः क्लमभरं हरं प्राणिनाम् ।**

**स्फुरत् कनककान्तिभिर्नवलताभिरावेल्लितो**
**ममाशु हरतु श्रमानतितमां तमालद्रुमः ॥**

इति श्लोके "अत्र तमालेन भगवतो निगरणे कलिन्दनन्दिनीत्यादीनि त्रीणि चरणत्रयगतानि विशेषणानि तदनुग्रहार्थं विषयविषयिणोः साधारणधर्मतया साक्षादुपात्तानि । चतुर्थमपि चतुर्थचरणगतम् **अवैय्याकरणानां दर्शने । वैय्याकरणानां तु** उपात्तया तमालाभिन्नकर्तृकया ......" – इति विवृण्वन् अग्रे "न च 'बोधयन्निव बोधयन्' इति प्रतीयमानेऽयम् उत्प्रेक्षा 'व्यालिम्पति तमोङ्गानि नभो वर्षति कज्जलम्' इत्यादाविवेति वाच्यम् । वस्तुनः सम्भवेनैव तस्याः अप्रसक्तेः इत्याहुः । इदं च – **धातुनोक्तक्रिये नित्यं कारके कर्तृतेष्यते**- इत्युक्तपथेन **धातूपात्तव्यापाराश्रयत्वं कर्तृत्वमि**ति सङ्गच्छते । यदि तु कृताकृतविभागानुपपत्तेः यत्नार्थकात् 'कृञः तृचि' सविषयार्थकधातूत्तरकर्तृप्रत्ययस्य आश्रयत्वे **निरूढलक्षणया यत्नाश्रयः कर्तृपदार्थः । स एव च कर्तृप्रत्ययानां मुख्यार्थः । अचेतनस्तु भाक्तः** । इति नयपथेन निरीक्ष्यते तदा बोधयन्नित्यत्र प्रतीयमानोत्प्रेक्षा सम्भवत्येव ।" इति । (रसगङ्गाधरे पु. ३४९)

निदर्शनाप्रकरणान्ते च –

**यान्ति गुरुजनैस्साकं स्मयमानाननाम्बुजा ।**
**तिर्यग्ग्रीवं यदद्राक्षीत् तन्निष्पत्राकरोत् जगत् ॥**

इति श्लोके "अत्र **भावप्रधानमाख्यातम् इति यास्कोक्तरीत्या क्रियाविशेष्यकबोधवादिनां** शाब्द एव अभेदारोपः क्रिययोरिति मुखं चन्द्रः इत्यादाविव रूपकमुचितम् । **प्रथमान्तविशेष्यकबोधवादिनां** तु आर्थः सः इति निदर्शनेति भेदः ।" – ( रसगङ्गाधरे पु. ३४६)

'दण्डेन घटः' इत्यादौ दण्डजन्यतावान् घटः इति हि सर्वजनीने बोधे 'हेतौ तृतीया' इति मुनिवचनावलम्बेन दण्डाभिन्नहेतुको घटः इति बोधं वदता भवतैव अस्याः सरणेः दर्शितत्वात् । **भावप्रधानमाख्यातमित्याद्यनेकैः मुनिवचनैः तत्र तत्र त्वत्कृतबोधवैपरीत्यस्य अनुचितत्वाच्च** इति कृतमप्रसक्त-विचारेण (पु.३६०) इति। एवं रसगङ्गाधरे एतद्ग्रन्थदर्शनेन यास्कादिमुनि-वचनानाम् आदरः बहु कृतः इति गम्यते।

"तत्र तावत् –

**विबोधयन् करस्पर्शैः पद्मिनीं मुद्रिताननाम् ।**
**परिपूर्णानुरागेण प्रातर्जयति भास्करः ॥**

इत्यत्र किरणस्पर्शकरणकमुकुलितपद्मिनीकर्मकविकासानुकूलव्यापारव-दभिन्नो भास्करो जयतीति वाक्यार्थः शक्त्यैव तावत्प्रतीयते । हस्तस्पर्शकर-णकनायिकाविशेषकर्मकानुनयानुकूलकव्यापारवदभिन्नः इत्यादिश्च अपरोक्षा-र्थः उभयत्रानुशक्ततया तयैव शक्त्या शक्त्यन्तरेण व्यक्त्या वा सर्वथैव प्रतीयतेत्यत्र **सहृदया एव प्रमाणम्** । .......... एवं चात्र शक्त्याक्षेपाभ्यां सर्वार्थनिर्वाहः इति भामहोद्भटप्रभृतीनां चिरन्तनानामाशयः। – (पु.३७०)

अथ "विरोधमूलालङ्काराः एकाधिकरणसम्बद्धत्वेन" ..... इत्यत्र एव-मस्ति – "क्रियायाः क्रियाद्रव्याभ्यां द्रव्यस्य द्रव्येण इत्यपुनरुक्ताः दशभेदाः । क्रिया चात्र न **वैय्याकरणानामिव शुद्धा भावना । नापि नैय्यायिकाना-मिव स्पन्दरूपा । किन्तु तत्तद्धातुवाच्या विशिष्टव्यापाररूपा** । – (पु.४२७)

"**यथा भगवद्गीतासु** 'हतो वा प्राप्स्यसे स्वर्गं जित्वा वा भोक्ष्यसे महीम्' - अत्र महीभोगस्वर्गप्राप्त्योः उत्तमत्वेनौपम्यम् विवक्षितम् । तथा च धात्वर्थ-

योरयं विकल्पः - इत्येके । आख्यातार्थयोः इत्यपरे । सर्वथैव न महीस्वर्गयो-
रिति स्थितम् ।........." – (पु.४८८)

## महिमभट्टविरचिते व्यक्तिविवेके

**इत्थं चास्तिभवत्यादिक्रियासामान्यमुच्यते ।**
**नान्तरङ्गतयावश्यं वक्तारस्तत्प्रयुञ्जते ॥**

**क्रियाविशेषो यस्त्वन्यः पाकादिर्व्यभिचारभाक् ।**
**बहिरङ्गतया तस्य प्रयोगोऽवश्यमिष्यते ॥**

इति ग्रन्थारम्भे एते श्लोकाः पठिताः । ततः परं "भावप्रधानमाख्यातम् । असत्त्वभूतार्थाः उपसर्गादयः" इत्यादिभागः प्रवृत्तः । ततः परं –

**द्विधा कैश्चित् पदं भिन्नं चतुर्धा पञ्चधापि वा ।**
**अपोद्धृत्यैव वाक्येभ्यः प्रकृतिप्रत्ययादिवत् ॥**

इति । एतच्च वक्ष्यते – **वाक्यमेकप्रकारम् क्रियाप्राधान्यात् तस्याश्च** एकत्वात् । यदाहुः –

**साकाङ्क्षावयवं भेदे परानाकाङ्क्षशब्दकम् ।**
**क्रियाप्रधानं गुणवत् एकार्थं वाक्यमिष्यते ॥ .... (पु.६)**

**स्नेहं समापिबति कज्जलमादधाति ।**
**सर्वान् गुणान् दहति पात्रमधःकरोति ॥**

**योऽयं कृशानुकणसञ्चयसम्भृतात्मा ।**
**दीपः प्रकाशयति तत्तमसो महत्त्वम् ॥**

अत्र हि प्रकाशनक्रियाया एव प्राधान्यविवक्षा न अन्यासामिति तासां

तत्समशीर्षिकया निर्देशः दोष एव । स हि शत्रादिभिरेव वक्तुं न्याय्यः नाख्यातेन । यथा "बिभ्राणः शक्तिमाशु....." । सर्वासां पुनः प्राधान्यविवक्षायां नाख्यातवाच्यत्वं दोषः । यथा " सौधादुद्विजते ......"

**यत्रैककर्तृकानेका प्राधान्येतरभाक्क्रिया ।**
**तत्राख्यातेन वाच्याद्याः शत्राद्यैरपरा पुनः ॥"**

इति श्लोकविवरणसन्दर्भे अन्ते एवं महिमभट्टेनोक्तम् –"न चायमर्थः । स्वमनीषिकया एव अस्माभिरुपकल्पिताः । किं तर्हि आचार्यस्यापि अभिमत एव । यदयं समासविधौ समर्थग्रहणं कृतवान् । केवलं तदभिप्रायमनवगच्छद्भिः व्याख्यातृभिः सापेक्षतादि दोषान्तरव्यावृत्तिपरतयैव यद्व्याख्यातं न पुनः एतद्व्यावृत्तिपरतयापीति तदभिप्रायमेवास्माभिः प्रकटयद्भिः तस्येहार्थत्वमपि प्रतिपादितम्, नतूपूर्वं किञ्चित् ।" – (पु.५४)

अन्यत्र व्यक्तिविवेके – "अस्तु को दोषः? उभयोरपि लक्षणानुगमसम्भवादिति चेत् । सत्यम् । किन्तु प्रतीतिरिह प्रधानमिति सैवानुसर्तव्या न लक्षणमात्रम्, तस्य तदर्थत्वादित्युक्तम् । सा च यावद्भिरुपजायते तावतामेव प्रयोगः युक्तः नातिरिक्तानाम् । न च प्रतीतिमनादृत्यैव लक्षणमस्तीत्येव अतिरिक्तपदप्रयोगो युक्तः । तस्यार्थप्रयु- क्तत्वात् । अर्थस्य चाधिक्याभावात् । तदुक्तम् – तदर्थावगत्यर्थो हि शब्दप्रयोगः । अर्थश्चेदवगतः किं शब्दप्रयोगेणेति । तस्मादुभयोरपि लक्षणानुगमसम्भवे येनैव लघुनोपायेन प्रधानसिद्धिः तदेव लक्षणमाश्रयणीयं भवति नेतरत् । ............... इत्यलम् अवान्तरचिन्तया ।" (पु.७८)

इत्येवं महिमभट्टग्रन्थपर्यालोचने तेन महानादरः महर्षिवचने कृतः इति ज्ञायते । महर्षिवचनानि उदाहृत्य गौरवसूचनात् । परम् अग्रिमग्रन्थे (पूर्व-

स्थितं प्रघट्टकं द्रष्टव्यम्) अर्थप्रतीत्यर्थं यावान् शब्दप्रयोगः अपेक्षितः तावतैव सम्भवे अधिकप्रयोगः अनपेक्षितः इत्यपि प्रतिपादितवान् । अतश्च सामान्यदृ-ष्ट्या आख्यातपदरहितमपि तेन वाक्यमभ्युपगतमिति व्यज्यते । आख्यातप-दमवश्यं वाक्ये प्रयोक्तव्यमिति नास्ति निर्बन्धः इति ।

## व्यक्तिविवेकव्याख्याने "पश्य मृगो धावति" इत्यत्र किमस्ति

पौर्वापर्यं क्रियाणामिति प्रतीकमुद्धृत्य एवं लिखति – "इह द्विविधं क्रियाणां पौर्वापर्यम् । शाब्दं वास्तवं च । तत्र शाब्दं प्रायेण आख्यातवाच्य-तया प्रधानक्रियया सह गुणक्रियाणां तासां तया सह गुणप्रधानभावेन सम्ब-न्धस्योचितत्वात् । 'गुणानां च परार्थत्वात् असम्बन्धः समत्वं स्यात्' इति न्यायेन गुणक्रियाणां परस्परं सम्बन्धाभावाच्च । वास्तवं तु यद्वस्तु बलप्रवृत्तं तद्गुणक्रियाणामपि सम्भवत्येव । आपेक्षिकस्य गुणप्राधान्यस्य तास्वपि भावात् सम्बन्धोपपत्तिः। यथा **'पश्य मृगो धावति' इति प्रधान-क्रिययोः** ।" इति अत्र व्याख्याकारेण क्रियाप्राधान्यं स्वीकृत्यैव अर्थवर्णनं क्रियत इति वैय्याकरणसमयमङ्गीकृत्य इदं प्रवृत्तमिति ज्ञायते । – (पु.५)

**काव्यप्रकाशकृतापि मम्मटेन** 'गौर्वाहीकः' इति प्रयोगे एवं स्वाभिप्रायः प्रकटितः । गोवृत्तिजाड्यादिगुणजातीयजाड्यादिगुणवान् वाहीकः इति वि-नैवाख्यातपदं बोधः वर्णित इति इत्यपि ध्येयः ।

एवं प्राचीनालङ्कारिकैः वैय्याकरणदर्शनं बहु आदृतम् । परं नवीनाल-ङ्कारिकैः तत्र तत्र वैय्याकरणदर्शनमादृतमपि **'न च वैय्याकरणमतविरोधः दूषणम् इति वाच्यम् । अलङ्कारशास्त्रस्य स्वतन्त्रत्वेन ....'; तथा आख्यातवादशिरोमणिव्याख्यातृभिरपि एवं व्याख्यातमिति चेत्, नैवम्** इति; तथा **निरूढलक्षणया आख्यातार्थः कर्ता** इति च निरूपयता यथा-

योग्यं स्वस्वग्रन्थानुगुणतया न्यायदर्शनं, मीमांसादर्शनं, व्याकरणदर्शनं स्वीकृतम् । अथापि स्वीयेनैव विलक्षणक्रमेण तत्तद्दर्शनानां वाक्यविशेषेषु दोषं प्रदर्शयता तत्तद्दर्शनेषु दोषोद्धाटनं कृतम् । अपि च "भावप्रधानमाख्यातम्" इत्यादिस्थलेषु स्वशास्त्रानुगुणतया तत्तदवसरे प्रमाणीकृतश्च । इति अलङ्कारशास्त्रे आख्यातविचारः ।

--०--

## विशिष्टाद्वैतमते आख्यातवादः

विशिष्टाद्वैतिनोऽपि स्वाभिप्रेतं बोधं मतभेदेन निरूपयन्ति । प्रायः वैय्याकरणमतमनुसरन्त्येते । क्वचित् नैय्यायिकमतमपि । तदेतत् तेषां ग्रन्थावलोकनेन गम्यते । अत्रेदम् अवधेयम् – अत्र विशिष्टाद्वैतमते आख्यातवादे तद्ग्रन्थदर्शनेनैव आख्यातविचारस्य स्फुटं प्रतिभासनात् न बहु विव्रियते ।

## न्यायपरिशुद्धौ आख्यातविचारः

लिङर्थविचारसन्दर्भे उदयनोक्तानुपपत्तिः अस्मत्पक्षे (विशिष्टाद्वैतपक्षे) नास्तीति कथनवेलायां दृश्यमानः ग्रन्थः – "कर्तृव्यापारसाध्यत्वमेव च कर्तव्यत्वम् । तथाहि – **वेदार्थसङ्ग्रहे रामानुजाचार्यविरचिते** लिङादेः कोयमर्थः परिगृहीतः इति प्रश्नपूर्वकं प्रत्युक्तम् । 'यज देवपूजायाम्' देवताराधनभूतयागादेः प्रकृत्यर्थस्य कर्तृव्यापारसाध्यतां व्युत्पत्तिसिद्धां लिङादयः अभिदधतीति न किञ्चिदनुपपन्नं **कर्तृवाचिनां प्रत्ययानां** प्रकृत्यर्थस्य कर्तृव्यापारसम्बन्धप्रकारो हि वाच्यः भूतवर्तमानतादिम् अन्ये वदन्ति । लिङादयस्तु कर्तृव्यापारसाध्यतां वदन्तीति । **भाष्ये चाद्यसूत्रे ("अथातो ब्रह्मजिज्ञासा")** – अतः विधिवाक्येष्वपि धात्वर्थस्य कर्तृव्यापारसाध्यतामात्रं शब्दानुशासनसिद्धमेव लिङादेः वाच्यमित्यध्यवसीयते । धात्वर्थस्य च यागादेः अग्न्यादिदेवतान्तर्या-

मिपरमपुरुषसमाराधनरूपतासमाराधितात् परमपुरुषात् फलसिद्धिश्चेति 'फल-मत उपपत्तेः' इत्यत्र प्रतिपादयिष्यत इति । अत्र कर्तृव्यापारसाध्यतामात्रमिति निष्कृष्टार्थप्रदर्शनायोक्तम् । प्रतिपत्तिप्रकारस्तु – 'यजेत' इत्यादौ स्वव्यापा-रसाध्ययागादिविशिष्टः इति कर्तृप्राधान्येनैव । यथोक्तं **दीपे – कर्त्रधिकरणे** 'यजेत' 'उपासीत' इति **कर्तरि लकारः**, अतः कर्तारमेव बोधयति शास्त्र-मिति । उक्तं च **वेदार्थसङ्ग्रहेऽपि** 'स्वर्गकामो यजेत' इत्येवमादिषु **लकारवा-च्यकर्तृविशेष्यसमर्पकाणां स्वर्गकामादिपदानां नियोज्यविशेषसमर्पक-त्वं शब्दानुशासनविरुद्धम् इति** । यद्यपि दीपग्रन्थः पुंसः कर्तृत्वं श्रुति-सिद्धमित्यत्रैव तत्परः । तथापि धात्वर्थसाध्यतापरलिङ्गादिष्वपि कर्तृप्रधानत-या वृत्तिं प्रदर्श्य साङ्ख्यान् प्रतिक्षिपति इति तादर्थ्यात् तत्रापि तत्परत्वमेव ग्रा-ह्यम् । "पचति" इत्यादौ "पाकं करोति" इत्यादि निपुणव्याक्रियाश्च कृति-कर्मतयैव धात्वर्थस्यान्वयं व्यञ्जयन्ति । **श्रीमद्गीताभाष्ये च** एतद्व्यञ्जितम् – 'युद्ध्यस्व' इत्यत्र 'युद्धाख्यं कर्म आरभस्व' इति व्याख्यानात् । व्याकर-णात् करणतया च धात्वर्थस्यान्वये कथं क्रियाविशेषणस्य कर्मविभक्त्यन्तता । ............ 'अग्निहोत्रं जुहोति' इत्यादयश्च प्रयोगाः अस्मत्पक्षानुकूलाः ।"
–(पु.३९९-४०१)

'पवित्रं ते' इति मन्त्रे हि पूर्वोत्तरार्धयोर्मिलित्वा वाक्यचतुष्टयं भवति । "ब्रह्मणस्पते ते पवित्रं विततं भवति" इति एकं वाक्यम् । **अस्तिर्भवन्तीपरः अप्रयुज्यमानोऽपि प्रतीयत इति** भाष्यात् । "त्वं प्रभुः विश्वतः गात्राणि पर्येषि" - इति द्वितीयं वाक्यम् । "अतप्ततनूर्धामः तन्नाश्नुते" - इति तृतीयं वाक्यम् । "शृतासो वहन्तः तत्समाशात" - इति चतुर्थं वाक्यम् ।(पु.४१९)

"चत्वारि शृङ्गाः त्रयोऽस्य पादाः ....." इत्यत्र "शाब्दिकास्तु शब्द-परत्वेन व्याख्यां नयन्तीति सायणभाष्ये वर्तते । तथा च पस्पशाह्निके भगवान्

भाष्यकारः पतञ्जलिः 'चत्वारि पदजातानि नामाख्यातोपसर्गनिपाताश्च....." –( पु.४२६)

**"सन्ध्यामुपासते ये तु सततं संशितव्रताः ।**
**विधूतपापास्ते यान्ति ब्रह्मलोकं सनातनम् ॥**

अत्र विवरणसन्दर्भे –पाप्मानं पापं प्रत्यवायं वा अतितरेम = नाशानुकूलव्यापाराश्रयाः। अभावप्रयोजकधर्माश्रयाः वा ।" - इति वर्णितः । –(पु.४३७)

**"प्र ते विष्णो अब्दचक्रे पवित्रे,**
**जन्माम्भोधिं तर्तवे चर्षणीन्द्राः ।**
**मूले बाह्वोः दधतेऽन्ये पुराणाः**
**लिङ्गान्यङ्गे तावकान्यर्पयन्ति ॥**

इत्यस्य विवरणवेलायां एवं बोधः प्रकृष्टवह्निसन्तप्तस्वसंयोगजन्यकिरणवत्वरूपसम्बन्धप्रयोजकव्यापाराश्रयाः इति बोधः वर्णितः । अग्रे "नदीं तरति" इत्यादौ स्वाश्रयसंयोगसम्बन्धेन नदीनिष्ठः यः तीरसंयोगः तदनुकूलव्यापारकर्ता इति बोधः वर्णितः। –(पु.४४४)

**एवं विशिष्टाद्वैतसिद्धान्ते "पश्य मृगो धावति" इतिवत् "गृहाण गौर्गच्छति" इत्यत्र वैय्याकरणरीतिः अनुसृता इति अभियुक्ताः कथयन्ति।**

## तत्वमुक्ताकलापे आख्यातविचारः

**धात्वर्थस्यैव रूपं किमपि हि कथयन्त्यत्र सर्वे लकाराः**
**कर्तृव्यापारसाध्यं त्वभिदधति विधिप्रत्ययास्ते लिङाद्याः ।**

**वैघट्यं द्वारसिद्धिः प्रशमयति तथा सन्ति लोकोक्तभेदाः**
**सिद्धं शब्दानुशिष्ट्या त्विदमुचितमिति स्थापितं भाष्यकारैः ॥**

**द्वयं खलु शब्दार्थनिर्णयकारणम् । विशिष्टप्रयोगः व्याकरणं चेति । उभयमपि अस्मत्पक्षानुकूलम्** । लडादयः लकाराः सर्वेपि धात्वर्थस्यैव वर्तमानत्वभूतत्वादिकं किमपि रूपमभिदधति। एवं लिङादयोपि धात्वर्थस्यैव यागादेः कर्तृव्यापारसाध्यत्वमभिदधतीति समुचितमेतत् । अनेन व्याकरणमतमादृतमिति ज्ञायते ।

अत्रेदं बोध्यमिति **तत्वमुक्तकलापव्याख्याने** – यथा पचति “पाकं करोति” इति विवरणानुसारात् आख्यातार्थकर्तृविशेषणभूतकृत्यन्वयबलात् सर्वाख्यातत एव लाभात् लिङादौ विशेषाभावात् । न चाख्यातसामान्यात् कृतिविषयत्वस्य लाभः न तु कृतिसाध्यत्वस्येति वाच्यम् । ... दुर्वचत्वात् ।

## जिज्ञासादर्पणाख्ये[1] ग्रन्थे आख्यातविचारः

"अथातो ब्रह्मजिज्ञासा" इत्यत्र जिज्ञासापदार्थनिरूपणसन्दर्भे भाष्यपङ्क्तिम् इच्छायाः इष्यमाण प्रधानत्वात् इत्यवलम्ब्य वस्तुतस्तु इत्यादिना विवृतम् । प्रथमं इच्छायाः विशेषणत्वे इष्यमाणस्य विशेषत्वे च धातोः कर्मणः इत्यादिसूत्रमुपन्यस्य तत्रैव प्रकृतिप्रत्ययौ सहार्थं ब्रूतः .... इति नियमविरोधं च परिहृत्य, अन्तेऽयं बोधः वर्णितः – एवञ्च कर्मविचारोत्तरकालकर्तव्यताप्रकारकः इच्छाविषयः ब्रह्मविचारः इति । अत्र च आद्यसूत्रे **श्रीभाष्यम्** – विधिवाक्येष्वपि धात्वर्थस्य कर्तृव्यापार(प्रयत्न)साध्यत्वमात्रं शब्दानुशासनसिद्धं विचारे वाच्यत्वमित्यध्यवसीयते । अत्र मात्रशब्देन लकारान्तर-

(1) Jijnasadarpanam by Sri Srinivasacharya - Academy of Sanskrit Research - Melkote- 2015

वाच्यवर्तमानत्वभूतत्वभविष्यत्वादेः एतद् वाच्यतया प्राभाकराद्यभिमत-नियोगादेश्च व्यवच्छेदः । कर्तृवाचित्वस्य तु न व्यवच्छेदः । प्रत्ययानां कर्तृवा-चितामन्तरेण तत्प्रकृत्यर्थश्च कर्तृव्यापारसाध्यताबुद्ध्यसम्भवात् ।

**नन्वेवं कर्तृविशेष्यक एव शाब्दबोधः** सिद्ध्येत् इति **धात्वर्थमुख्य-विशेष्यकबोधस्तु** तदभिमतो न सिद्ध्येत् इति चेत्, सत्यम् । **आख्यातस-मभिव्याहारे** स एव बोधः । इह तु सूत्रे कर्तव्यपदाध्याहारात् धात्वर्थमुख्यवि-शेष्यक एव बोधः इति न तद्विरोधः। अत एव **वेदान्तदीपे कर्त्रधिकरणे** – यजेत उपासीत इति कर्तरि लकारः। अतः कर्तारमेव बोधयति शास्त्रमित्यु-क्तम् । **वेदार्थसङ्ग्रहे च** – स्वर्गकामो यजेतेत्यादिषु लकारवाच्यकर्तृविशेष्य-कसमर्पकाणां स्वर्गकामादिपदानां नियोज्यविषयसमर्पकत्वं शब्दानुशासनवि-रुद्धमित्युक्तम् । अत एवाचार्यैः कर्तृव्यापारसाध्यतामात्रमिति निष्कृष्टार्थ-प्रदर्शनायोक्तम् । प्रतिपत्तिप्रकारस्तु – 'यजेत' इत्यादौ स्वव्यापारसाध्यः या-गादिविशिष्टः इति कर्तृप्राधान्येनैव । **अनेन आख्यातअसमभिव्याहारे धा-त्वर्थविशेष्यक एव बोधः इत्यपि दर्शितम्** । "तद्विजिज्ञासस्व" इति ति-ङन्तेऽपि तिङर्थकर्तृव्यापारसाध्यता धात्वर्थ इच्छाविषये अन्वेतीति विचारस्य विधेयत्वलाभः। अत एव "अश्वेन जिगमिषती"त्यादौ प्रधानान्वयस्यैव प्रथमं बुद्ध्यारोहात् लोके च अनुपपत्तिप्रतिसन्धानं विना गमनादौ अश्वाद्यन्वयं प्र-तिपद्यन्ते । **अतः धात्वर्थस्य प्रत्ययार्थात् प्राधान्यम् अनुभवारूढम्**" इति ।

एवमेवाग्रे – "वैश्वदेवं कृत्वान्नं भुज्यते" इत्यादौ हि कर्मणि लकारेण प्रधान....... विधायकात् वैश्वदेवपदे द्वितीया दृश्यते। एवं ग्रामं गच्छति, क्रियते इत्यादौ ..... अभिधानेऽपि अप्रधानकर्मणो द्वितीया। अनेन ग्रन्थ-भागेन व्याकरणविचार एव प्रस्तुतः तद्वाक्य(वैश्वदेवमित्यादि)विवरणावसरे।

अन्यत्र दर्पणग्रन्थे – "अतः 'तद्विजिज्ञासस्व' इत्यादौ इच्छाप्रकारकः ज्ञानविशेष्यक एव बोधः। तन्मते तु ब्रह्म जिज्ञासते इत्यादौ **आख्यातार्थ** वर्तमानत्वादेस्त्वान्वयः । .... [1]तुशब्दसामर्थ्यात् **धात्वर्थविशेष्यकबोध-जनकत्वं जिज्ञासापदस्य** .... सर्वत्र द्रष्टव्यः। एवं ब्रह्मजिज्ञासेत्यत्र प्रतीति-क्रमेण प्रवृत्तिक्रमः इति न्यायेन प्रथमं कर्मणि पूर्वभागार्थे विचारिते ततः उत्तर-भागविचारस्य दत्तावसरत्वाद् भवति । **अनेन धात्वर्थप्राधान्यं प्रत्ययार्था-प्राधान्यं च अर्थसिद्धम्**" इति।

## द्वैतग्रन्थे न्यायसुधाख्ये रामानुजमतोल्लेखः

नप्रयोजनाधिकरणे श्रीमन्न्यायसुधायामेवं ग्रन्थः – 'इह हि बुद्धिरेव ईश्व-रस्य अव्याहताक्रियाशक्तिः । त एव सर्वस्योपपत्तौ किमिच्छाप्रयत्न- कल्पन-या? यद्वा प्रयत्नः कर्तृत्वम् । तस्यैव आख्यातार्थतया निर्णीतत्वात्' - इत्युप-क्रम्य 'तदर्थं बुद्ध्यङ्गीकारे तयैव प्रयत्नस्य विषयनियमोपपत्तेः किम-न्तर्गडुनेच्छया मन्वानाः केचित् का स्पृहा - इति श्रुतिः न ईश्वरस्य प्रयोजने-च्छामात्रनिषेधपरा किन्तु इच्छालक्षणं गुणमेव निषेधति इति व्याचक्षते ।

अत्र श्रीनिवासतीर्थविरचितव्याख्यायाम् – केचित् = रामानुजाः इति विवृतम् ।

* * * * *

(1) अत्र ग्रन्थे एवं त्रुटितः भागः बहुत्र मुद्रितपुस्तके दृश्यते।

## द्वैतवेदान्ते आख्यातवादः

द्वैतवेदान्ते आख्यातविचारः विशिष्य **श्रीव्यासतीर्थविरचिते तर्कताण्डवे** दृश्यते ।

**तर्कताण्डवे प्रकरणविभागः एवम् ।**

(१) आख्यातस्य उदयनोक्तकृत्यर्थत्वभङ्गः

(२) आख्यातस्य मण्युक्तयत्नार्थत्वभङ्गः

(३) आख्यातस्य रत्नकोशकारोक्तउत्पत्त्याद्यर्थत्वभङ्गः

(४) आख्यातस्य प्राभाकरोक्तसङ्ख्यामात्रवाचित्वभङ्गः

(५) सङ्ख्यायाः वाच्यगामित्वनियमः

(६) कर्तृकर्मणोराख्यातार्थत्वसमर्थनम्

(७) धातोः मण्डनोक्तफलवाचित्वभङ्गः

(८) उपसर्गाणां वाचकत्वसमर्थनम्

अत्र तर्कताण्डवे यथायथं प्रस्तुतान् विषयान् तदनुकूलतया द्वैतग्रन्थसम्बद्धान् विषयांश्च संयोज्य निरूपणं क्रियते ।

## आख्यातविषये उदयनमतानुवादः

आख्यातप्रत्ययः नाम तिङ्प्रत्ययः । तदर्थः कः? इति उदयनेन विचारितः । तदित्थम् – आख्यातार्थः कृतिरेव इति तस्य मतम् । अत्र प्रमाणद्वयम् । विवरणरूपं प्रश्नप्रतिवचनरूपं च । प्रथमप्रमाणं निरूप्यते – 'चैत्रः पचति' इत्यादिस्थलेषु "पचति" इत्यस्य विवरणं 'पाकं करोति' इति । विवरणं च शक्तिग्राहकम् । यथोक्तं –

**शक्तिग्रहं व्याकरणोपमानकोशाप्तवाक्यात् व्यवहारतश्च ।**
**वाक्यस्य शेषात् विवृतेर्वदन्ति सान्निध्यतः सिद्धपदस्य वृद्धाः -**

इति कारिकायाम्।

एवञ्च यत्नार्थककरोतीतिविवरणेन तिङ्प्रत्ययस्य यत्नार्थकत्वं सिद्ध्यति । विवरणं नाम = तत्समानार्थकपदान्तरेण तदर्थकथनम् । अतः विव्रियमाण-विवरणवाक्ययोः समानार्थकत्वमङ्गीकर्तव्यम् । प्रकृते 'करोति' इति प्रयत्ना-र्थकोऽयं शब्दः । तेन विवरणेन तिङः विव्रियमाणस्य तदर्थकत्वं सिद्धम् । अपि च प्रश्नप्रतिवचनमिति द्वितीयं प्रमाणम् । अत्र किं 'करोति' इति प्रश्ने कृते पचतीति आख्यातेन प्रतिवचनं विधीयते । 'करोति' इति कृत्यर्थप्रतिपा-दनेन तत्समानार्थकमेव "पचति" इत्यत्र आख्यातस्य । अन्यथा प्रश्नोत्तरयोः व्यधिकरणत्वं स्यात् ।

आक्षेपः – विव्रियमाणविवरणवाक्ययोश्च समानाधिकरणत्वमपेक्षितम् इति तु सत्यम् । एतावता अत्र 'करोति' इति विवरणेन "पचति" इत्यत्र तिङ्प्रत्ययस्य न यत्ने शक्तिः सिद्ध्यति । अन्यथासिद्धत्वात् । अन्यथासि-द्धिश्च – आख्यातश्च व्यापारे शक्तः । व्यापारेण च कृतिः आक्षिप्यते । आक्षिप्तायाः कृतेः विवरणं करोतीत्यनेन अतः न यत्नार्थकत्वम् आख्यातप्र-त्ययस्य इति।

समाधानम् – नात्र आख्यातोक्तेन व्यापारेण कृतेराक्षेपः सम्भवति । यतो हि आक्षेपः आक्षेपकमपेक्षते । न चात्र व्यापारः कृतेः आक्षेपकः । यद्यपि द्वयोः कार्यकारणभावः वर्तते । कार्यं व्यापारः कारणं च कृतिः । अतः कार्येण कारणम् आक्षिप्यत इति प्रसिद्धम् । परन्तु अत्र आख्यातेन व्यापारः अभि-धीयत इति तद्वृत्तिव्यापारत्वं च चेतनाचेतनसाधारणव्यापारवृत्ति इति साधार-

णस्य व्यापारस्य असाधारणभूतायाः चेतननिष्ठकृतेः आक्षेपकत्वं न युज्यते । कृत्यभाववति रथादिषु जडेषु गमनानुकूलव्यापारसत्वात् । व्यापारत्वं कृति-व्यभिचारीति यावत् ।

तदेतत् सङ्गृह्य कुसुमाञ्जलौ पञ्चमे स्तबके एवमुक्तम् –

**भावनैव हि यत्नात्मा सर्वाख्यातस्य गोचरः ।**
**तया विवरणध्रौव्यात् आक्षेपानुपपत्तितः ॥ इति ।**

अयमर्थः – यत्नरूपा भावनैव सर्वाख्यातस्य अर्थात् सर्वलकारादेशतिङः गोचरः विषयः । सा च यत्नरूपा कारणद्वयेन गम्यते । विवरणध्रौव्यादाक्षे-पानुपपत्तेश्च इति । अत्रेदं बोध्यम् – लकारादेशः तिङ् । तिङ्प्रत्ययश्च स्ववृ-त्तिधर्मभेदेन भिन्नार्थं बोधयतीति । यथा तिङ्त्वेन रूपेण यत्नं, लट्त्वेन रूपेण कालादिकं च । उदाहरणं "पचति" इत्यत्र तिङ्प्रत्ययः ।

## उदयनमतखण्डनम्

उदयनेन प्रदर्शितं कारणद्वयं न युक्तम् । अत्रेदं बोध्यम् – यद्यपि करोतेः कृत्यर्थकत्वं नाभ्युपेतम्, अग्रे तर्कताण्डवे तत्खण्डनात् । अत्र तु अभ्युपेत्येदं समाधानं तर्कताण्डवे उक्तमिति बोध्यम् । तथाहि – "पचति" इत्यस्य 'पाकं करोति' इति विवरणेन आख्यातस्य यत्नार्थकत्वमिति पूर्वं प्रतिपाद्य विवरण-वाक्यस्य अन्यथासिद्धिमाशङ्क्य परिहारः अभिहितः । तदेव कारिकायामुक्त-म् – आक्षेपानुपपत्तितः इति । अत्र प्रकारद्वयेन परिहारः प्रदर्श्यते । तथाहि – "पचति" इत्यादौ आख्यातेन व्यापारत्वेन व्यापार एव अभिधीयताम् । न च व्यापारत्वेन व्यापारस्य कृत्याक्षेपकत्वं न सम्भवतीति वाच्यम् । अन्यथोप-पत्तेः । यथा घटेन जलमाहर इत्युक्ते घटशब्देन छिद्रेतरघटस्यैव ग्रहणम् । न तु छिद्रघटस्य योग्यताबलात् । प्रमाणाविरुद्धत्वादिति यावत् । अयमंशः अत्र

बोध्यः – यद्यपि तत्र घटशब्दस्य न छिद्रेतरघटे शक्तिः, न वा छिद्रेतरघटस्य शक्यतावच्छेदकत्वम् । अथापि यथा तदर्थः गृह्यते तथैव प्रकृतेपि "चैत्रः पचति" इति चेतनकर्तृकस्थले तिङ्प्रत्ययेन उपस्थितः व्यापारत्वविशिष्टव्यापारः योग्यताबलात् चेतननिष्ठकृतौ पर्यवस्यतीति, तद्विवरणम् करोतिना कृतम् - इति बोध्यम् । अतः नाक्षेपानुपपत्तिरिति नाख्यातस्य यत्नार्थकत्वम्, अपि तु व्यापारार्थकत्वम् ।

अथवा, व्यापाराक्षिप्त एव यत्नः । तथाहि – नात्र व्यापारः व्यापारत्वेन गृह्यते । किन्तु पाकाद्यर्थकपच्यादिसमभिव्याहृताख्यातपदवाच्यत्वेन । अत्रादिपदात् चैत्रादिपदं गृह्यते (अत्रापि चैत्रपदसमभिव्याहृत-आख्यातपदवाच्यत्वेन व्यापारग्रहणम्) । एवञ्च चैत्रकर्तृकपाकार्थकपच्यादिसमभिव्याहारदशायां यो व्यापारः सः कृतिं विनानुपपन्नः तदाक्षिपति इति वक्तुं शक्यत्वात् । तथा च आख्यातस्य व्यापारे शक्त्यङ्गीकारेपि आक्षिप्तस्य यत्नस्य करोतिना विवरणमिति न आख्यातस्य यत्नार्थकत्वमङ्गीकार्यम् । अतः न कारणद्वयम् उदयनोक्तम् उपपद्यते ।

आक्षेपः – विवरणवाक्येन शक्यार्थस्यैव विवरणं कर्तव्यमिति नियमः अस्तीति कथमाक्षिप्तस्य यत्नस्य विवरणं युज्यते ?

समाधानम् –एवं सति लाक्षणिकादेः विवरणस्थले अतिप्रसङ्गः । शक्यार्थाविवरणात् । यथा लक्षणास्थले गङ्गायां घोषः इति वाक्यस्य गङ्गातीरे घोषः इति विवरणम् । नात्र गङ्गापदं गङ्गातीरे शक्तम् । एवं सिंहश्चैत्रः इत्यादिगौणीवृत्तिस्थले सिंहसदृशश्चैत्रः इति विवरणम् । अत्रापि न सिंहपदं सिंहसदृशे शक्तम् । अतः शक्यार्थस्यैव विवरणं कर्तव्यमिति नियमाभावात् पर्यवसितस्य वा आक्षिप्तस्य वा विवरणं सम्भवतीति नात्र दोषः ।

## करोतेः कृत्यर्थकत्वमस्ति न वा?

किञ्च एतावता विवरणवाक्ये कृत्यर्थककरोतिना आख्यातार्थस्य विवरणात् - इति हेतुं प्रदर्श्य आख्यातस्य यत्नार्थकत्वं समर्थ्यत इति उदयनमतेभिहितम् । तत्र कृत्यर्थककरोतिना इत्यंश एव अनुपपन्नः इति प्रतिपाद्यते । तथाहि – कृञ् धातोरर्थः करणम् । स च न यत्नरूपः । अपि तु व्यापारापरपर्यायक्रियारूपः। अन्यथा रथो गच्छति, इच्छति, निद्राति इत्यादिस्थलेषु विवरणासम्भवः । तत्र च विवरणं गच्छतीत्यस्य 'गमनं करोति' इति, 'इच्छति' इत्यस्य इच्छां करोतीति, निद्राति' इत्यस्य निद्रां करोतीति । अत्र सर्वत्र कृञः यत्नार्थकत्वे अनुपपत्तिः । रथस्य जडत्वेन गमानुकूलकृतिमत्वासम्भवात् । इच्छां प्रति कृतेः जनकत्वासम्भवात् । सुप्ते च पुरुषे निद्रानुकूलयत्नासम्भवात् इति । अतः व्यापारार्थकत्वं कृञ्धातोः अङ्गीकार्यम् । एवं सति रथे चेतननिष्ठकृतेरसम्भवेपि चलनादिरूपव्यापारसम्भवात् रथो 'गमनं करोति' इति विवरणं युज्यते । एवमिच्छां करोतीत्यादिष्वपि इच्छानुकूलव्यापारार्थकत्वम् इत्यादिरर्थः ।

आक्षेपः – कृञ्धातोः यत्ने शक्तिसद्भावेपि बाधकवशात् गमनं करोतीत्यादौ व्यापारमात्रे लक्षणा स्वीक्रियते इति।

समाधानम् – तर्हि व्याख्येये यथा लाक्षणिकपदप्रयोगः तथा व्याख्यानेपि लाक्षणिकप्रयोगः कृतः इति स्यात् । किन्त्वेतदयुक्तम् । यतो हि व्याख्यानं व्याख्येये लाक्षणिकस्य अथवा तात्पर्यविषयीभूतार्थस्य विवरणार्थमेवास्ति । तत्र विवरणं च वाचकपदैरेव । प्रकृते रथो गच्छतीत्यत्र 'गमनं करोति' इति विवरणेन कृञ्धातोः लक्षणास्वीकारानौचित्यम् । अपि च एवं व्याख्याने लाक्षणिकप्रयोगस्वीकारे "पचति" इत्यत्र व्याख्यानभूते "पाकं करोति" इत्यस्य कृञः व्यापारमात्रे शक्तस्य कृतौ लक्षणा इति स्यात् । न चैतत् त्वदि-

ष्टम् । आख्यातस्य व्यापारे शक्त्यनङ्गीकारात् । अतः गमनं करोतीत्यादौ व्यापारे न लक्षणा । अपि तु शक्तिरेव ।

एतावता प्रतिवचनस्य गतिरुक्ता । इदानीं प्रश्नगतिमाह । तथाहि – किं करोतीति प्रश्ने "पचति" इत्युत्तरं युक्तम् । अयमत्र बोध्यः – पचतीति धात्वर्थविशेषमादायोत्तरं दीयते । अतः पूर्वं प्रश्नसमये धात्वर्थविशेषः अनिर्धारितः इति तत्समये यत्किञ्चिद्धात्वर्थज्ञानसत्वात् तदनुकूलचेतनाचेतनसाधारणव्यापारे एव आख्यातस्य शक्तिरुचिता । अतः व्यापारविषयस्य धात्वर्थविशेषस्यानिर्धारणेन किं करोतीति प्रश्ने पचतीति धात्वर्थविशेषेण उत्तरं युक्तम् ।

## कृञः यत्नार्थकत्वे उदयनेन प्रमाणान्तरोपन्यासः

अत्र प्रमाणद्वयं कृञः यत्नार्थकत्वे उदयनेन प्रदर्शितम् । अतः करोतेः न कृतिरर्थः किन्तु व्यापाररूपा क्रियैव न तु यत्न एव इति तु असिद्धम् । तथाहि – कुसुमाञ्जलौ पञ्चमे परिच्छेदे –

**कृताकृतविभागेन कर्तृरूपव्यवस्थया ।**
**यत्न एव कृतिः पूर्वापरस्मिन् सैव भावना ॥**

अयमर्थः – अत्र कारणद्वयं प्रदर्शितम् । कृताकृतविभागेन कर्तृरूपव्यवस्थया इति च । प्रथमस्य विवरणम् – लोके एवं प्रयुज्यते । घटः मया कृतः, अङ्कुरो न मया कृतः इति । अस्य व्यवहारस्य निर्वाहाय अवश्यं कृञः यत्नार्थकत्वं स्वीकर्तव्यम् । अन्यथा कृञः व्यापारार्थकत्वे द्वितीयः प्रयोगः नोपपद्यते । यतः घटे यथा व्यापारजन्यत्वं तथा अङ्कुरेपि क्षेत्रकर्षण-जलसेचनादि व्यापारजन्यत्वसत्वेन अङ्कुरो न मया कृतः इति प्रयोगः न युज्येत । तदर्थं कृञः यत्नार्थकत्वम् । ततश्च घटे चेतनकृतिजन्यसत्वेपि अङ्कुरे न चेतनकृति-

जन्यत्वं नास्तीति । (अत्रेदं बोध्यम् – वस्तुतः न्यायमते सर्वस्यापि यथायथं तत्तज्जीवोपभोग्यतया जीवादृष्टनिर्मितत्वेन अदृष्टद्वारा जीवानामेव कर्तृत्वमुपपद्यत इति कृतिजन्यत्वं एतादृशमस्त्येवेति बोध्यम् । अङ्कुरो न मया कृतः इति युज्यते च प्रयोगः) । न च न गिरिधरवर्ति अङ्कुरः अत्र गृहीतः, येन चेतनकृतिजन्यत्वं न इति वक्तुं शक्येत । अपि तु क्षेत्रकर्षणादिव्यापारजन्यो यो अङ्कुरः सः । तत्र कृतिजन्यत्वं तावदबाधितम् । अतः एतत्स्थलेपि अङ्कुरोन मया कृतः इति व्यवहार अनिर्वाह एव इति वाच्यम् । इदमत्राकूतम् – कृञः यत्नार्थकत्वे अङ्कुरो न मया कृतः इति प्रयोगः उपपद्यते । यतो हि पुरुषेण 'बीजावापमात्रे मम प्रयत्नः । बीजादङ्कुरोत्पत्तौ तु नास्मत्प्रयत्नः' इति प्रतिसन्धीयत इति कृञः यत्नार्थकत्वे पूर्वोक्तः प्रयोगः युक्तः । अथवा अङ्कुरं प्रति प्रयोजकोहमिति प्रतिसन्दधाति पुरुषः इति अभिप्रायः । एवं स्वीकारे पूर्वोक्तः आक्षेपः युज्यत इति ।

द्वितीयं कारणम् – कर्तृरूपव्यवस्थया इति । अयमर्थः – कर्तृ इति शब्दस्वरूपमेव कर्तृरूपमिति गृह्यते । तस्य व्यवस्थया नाम कर्तृपदस्य यौगिकस्य कृत्याश्रयवाचकत्वेन कृञः यत्नार्थकत्वमिति भावः । इदञ्च पदं यौगिकम् । कृञ् धातुः तदुत्तरं तृच्प्रत्ययश्च । एवञ्च धातोरर्थः कृतिः । प्रत्ययार्थश्च आश्रयः । तदेवं पूर्वार्धव्याख्यानं सम्पन्नम् । अत्र च पूर्वार्धे कारणद्वयमुपस्थापितम् कृञः यत्नार्थकत्वविषये ।

उत्तरार्धार्थश्च एवम् – पूर्वापरस्मिन्निति एकं पदम् । तत्र च सप्तमी विषयार्थिका । एवञ्च यत्नो नाम भावना । सा च पूर्व-अपरीभूतव्यापारकलापविषयिणी कृतिरेव । अतः आख्यातस्य कृतिवाचकत्वे सम्भाविते सति भावना आख्यातार्थः कथं वा भवेत्? इति शङ्का न युज्यते ।

## कृञः यत्नार्थकत्वे उपन्यस्तप्रमाणद्वयस्य खण्डनम्

अत्र इदं बोध्यम् उदयनमतखण्डनं च मणौ वर्धमाने च विद्यते । तदेव तर्कताण्डवे प्रदर्शितम् । परम् अनेन च नैय्यायिकैरेव स्वमते दोषप्रदर्शनेन स्वप्राचीनमतमस्वरसमिति तैरेवाङ्गीकृतमिति किमु अत्र वक्तव्यम् इति सूच्यते । अपि च तद्भियैव सङ्कोचेनैव भट्टमुखेन उदयनमतं दूष्यते मणिका-रेण इति बोध्यम् ।

तदित्थं खण्डितम् –इच्छां करोति, प्रयत्नं करोति, निद्रां करोति, बी-जमङ्कुरं करोति इत्यादिप्रयोगेषु यत्नजन्यत्वाभावेपि इच्छादेः कृतः इति व्यव-हारः क्रियते । तदित्थम् – इच्छा कृता, निद्रा कृता । अतः न आख्यातस्य यत्नार्थकत्वम् ।

अपि च नैय्यायिकमते कार्यसामान्यम् ईश्वरजन्यमिति स्वीकारेण घटगि-रिधरवर्त्यङ्कुरयोः कृतिजन्यत्वसाम्येपि शरीरव्यापारजन्यत्वाजन्यत्वाभ्यामेव घटो मया कृतः, अङ्कुरो न मया कृतः इति व्यवहारनिर्वाहात् कृञ्धातोः व्या-पाररूपक्रियार्थकत्वमेव युक्तम् । अत्रेदं बोध्यम् – पूर्वं पूर्वपक्षे व्यापारजन्य-त्वस्य उभयत्र समानत्वेपि कृतिजन्यत्वाजन्यत्वाभ्यां कृताकृतव्यवहारः दर्शितः । इदानीं च विपरीततया कृतिजन्यत्वस्य उभयत्र समत्वेपि शरीररूप-व्यापारजन्यत्वाजन्यत्वाभ्यां कृताकृतव्यवहारः दर्शितः । इति न्यायसिद्धान्त-स्य एवं परिष्कारः युक्तः इति अनेन विवरणेन दर्शितम् ।

अपि च कर्तृपदं न यौगिकम् । यौगिकत्वं च अस्य एवम् – कर्तृपदनि-ष्पत्तिः डुकृञ्करणेत्यस्मात् ण्वुल् तृचौ इति सूत्रेण कर्तरि तृच्प्रत्यये सार्वधातु-कार्धधातुकयोः इति सूत्रेण गुणेरपरत्वे च कर्ता इति रूपम् । परन्तु एतन्न युक्तम् । तथा हि कृधातोः कृतिरर्थः तृच्प्रत्ययस्याश्रयः अर्थः इति पूर्वपक्षे

विवृतम् । तदयुक्तम् । तथात्वे कर्तृपदस्यार्थः कृत्याश्रयः इति स्यात् । एवं सति सर्वत्र तृच्प्रत्ययस्य आश्रयार्थकत्वेन पक्ता इत्यत्र पाकाश्रयः इति प्रतीतिः स्यात् । न तु पाककृत्याश्रयः पुरुषः इति ।

नापि तृच्प्रत्ययस्य कृतिरूपः अर्थः। प्रकृत्यर्थस्य प्रत्ययार्थे विषयतासम्बन्धेन जनकतासम्बन्धेन वा अन्वयः वक्तव्यः । न च तद्युक्तम् प्रकृति-प्रत्ययार्थयोरविशेषात् । अभेदान्वये च पाकरूपाकृतिः इत्येव बोधः स्यात् । कर्त्रा इत्यत्रापि कृतिरूपाकृतिरित्यर्थः स्यात् । न तु कृत्याश्रयः इति । अतः तृच्प्रत्ययस्य कृतिमान् इत्यर्थः वर्णनीयः । तथा च कर्ता इत्यत्र धातोरर्थस्य कृत्यात्मकस्य प्रत्ययार्थे कृत्याश्रये अनन्वयापत्तिः । कृत्याश्रयस्य पुनः कृत्या अन्वयस्य अयुक्तत्वात् । अतः पररीत्या कृत्याश्रये कर्तृपदं रूढम् अथवा स्व-रीत्या व्यापाराश्रये रूढमिति वक्तव्यम् । न तु यौगिकमिति कृञः यत्नार्थक-त्वाभावेन करोतीति विवरणेन साधयितुं न शक्यते । इति यौगिकत्वे प्रसक्तपक्षत्रयं (कृतिः, कृत्याश्रयः, आश्रयः) निराकृतम् । एवम् उदयनेनोप-न्यस्तं प्रमाणद्वयं खण्डितम् ।

## तर्कताण्डवरीत्या आख्यातार्थः

अत्र ग्रन्थे पूर्वं लिङर्थः इष्टसाधनत्वम्, न तु अपूर्वः इति उपपादितम् । एवं निरूपणे कृते प्रसङ्गसङ्गत्या आख्यातार्थं निरूपयितुमारभते। लिङर्थनि-रूपणावसरे सर्वविधलकारादेशभूतस्य तिङःस्मरणात् तदर्थविचारः इति यावत्।

एतन्मते आख्यातप्रत्ययः नाम तिङ्प्रत्ययः । तस्यार्थः व्यापारसामान्य-म्, न तु यत्नरूपः व्यापारविशेषः एव इति नियमः । अतः व्यापारत्वेन यत्न-स्य आख्यातवाच्यत्वम् इष्टमेव । यत्नत्वेन तु यत्नस्य नाख्यातवाच्यत्वम् इति

भावः। उदाहरणम् – "पचति" इत्यत्र आख्यातप्रत्ययः तिङ् । तस्यार्थः अधःसन्तपनादिरूपधात्वर्थानुकूलव्यापारः। अर्थात् विक्लित्त्यादिफलजनकः यः अधःसन्तपनादिरूपपच्यादिधात्वर्थः तदनुकूलः शरीरस्पन्दादिरूपो व्यापारः।

शब्दार्थनिर्णयश्च वृद्धव्यवहारादिप्रयोगात् प्रत्ययाच्च गम्यत इति प्रथमं प्रयोगादिकं दर्शयति – आख्यातस्य चेतनाचेतनसाधारण्येन प्रयोगः। तथाहि – चैत्रः पचति इति चेतनकर्तृकस्थले आख्यातप्रयोगः। रथो गच्छतीति अचेतनस्थले च आख्यातप्रयोगः। अतः उभयप्रयोगानुगुणतया आख्यातप्रत्ययः व्यापारमात्रे शक्तः न तु व्यापारविशेषे यत्ने। तथा सति रथो गच्छतीत्यत्र आख्यातः गौणः स्यात् । अस्तु गौणत्वमिति न वाच्यम् । मुख्ये व्यापाररूपेऽर्थे अनुगततया सम्भवति सति अमुख्यार्थस्य यत्नरूपव्यापारविशेषग्रहणस्याशक्यत्वात् ।

## तत्वचिन्तामणौ आख्यातवादः

मणिकाररीत्या आख्यातार्थः कृतिरेव । न तु व्यापारः। तर्हि उदयनमतदूषणं भट्टमुखेन कथं चिन्तामणिकारेण कृतमिति न शङ्क्यम्। यतः प्रमेयविषये अर्थादाख्यातवाच्यः कः? इति विषये उदयनमणिकारयोः अभिप्रायभेदो नास्ति । परन्तु उदयनानुमतयुक्त्यादयः एतेन अनभिमताः। अतः युक्त्यन्तरेण यत्नरूपार्थमेव समर्थयितुं प्रयतते । तथाहि – अत्राख्यातस्य कृत्यर्थकत्वे प्रतीतिः प्रमाणम् । यथा "पचति" इत्यत्र पाकानुकूलयत्नप्रतीतिः। न च आख्यातेन व्यापारः प्रतीतः तेन च यत्नः आक्षिप्यत इति वाच्यम् । व्यापारस्य कार्यत्वेन स्वकारणीभूतयत्नाक्षेपकत्वात् इति यावत् ।

तथा सति प्रतीतिद्वयानुभवः स्यात् । यथा आक्षेपस्थले पीनो देवदत्तः

दिवा न भुङ्क्ते इत्यस्मात् जायमानप्रतीतिरेका; तदन्तरं जायमानरात्रिभोजनविषयिणी प्रतीतिः अपरा। तथैव प्रकृतेऽपि "पचति" इत्युक्ते प्रथमं व्यापारप्रतीतिः तदनन्तरं कृतिप्रतीतिः । परम् एवं न अनुभूतः ।

अपि च शब्दस्य आख्यातस्य व्यापारे यदि शक्तिः तदा शक्यतावच्छेदकम् अर्थात् प्रवृत्तिनिमित्तं व्यापारत्वम् । तच्च उपाधिरूपं गुरुशरीरोपेतम् । यतो हि व्यापारत्वं शुद्धधात्वर्थानुकूलव्यापारत्वम् । अथवा (तज्जन्यत्वे सति तज्जन्यजनकत्वरूपत्वं वा) परिस्पन्दरूपत्वम् इति गीयते । तदपेक्षया यत्नस्य आख्यातार्थत्वे यत्नत्वं प्रवृत्तिनिमित्तम् । तच्च जातिरूपम् । अतः एकत्वेन, अखण्डत्वेन इति यावत्, लघुभूतमिति तस्यैव आख्यातार्थत्वं युज्यते । तथा शक्तिग्राहकप्रमाणेन लघुनि शक्तिग्रहस्यैव दृष्टत्वात्। यथा घटत्वविशिष्टे घटे घटपदस्य शक्तिः, न तु कम्बुग्रीवादिमत्वविशिष्टे घटे । अतः प्रकृते यत्ने आख्यातस्य शक्तिरुचिता। लघुनि शक्तिग्रहस्यैव दृष्टत्वात्।

आक्षेपः – यदि यत्नस्यैवाख्यातार्थत्वं 'रथो गच्छति' इत्यादिषु कथम्? अत एव व्यापारमात्रार्थकत्वम् आख्यातस्य इति गमनानुकूलव्यापारार्थप्रतीतिः युज्यते ।

समाधानम् – अचेतनकर्तृकस्थले आख्यातो लाक्षणिकः इति स्वीकृत्य यत्ने एव तस्य शक्तिरिति अभिधीयते । अन्यथा शक्त्यतिरिक्तवृत्त्यन्तरोच्छेदः स्यात् । तथाहि – सर्वत्रानुगमाय अर्थात् चेतना- चेतनसाधारण्येन आख्यातप्रयोगे व्यापारार्थः युज्यत इति तस्यैव यदि आख्यातपदवाच्यत्वम्, तदा लाक्षणिकप्रयोगः इति नास्त्येव । यथा गङ्गायां घोषः इति लाक्षणिकं स्थलम् । अत्रापि प्रवाहतीरसाधारण्येन गङ्गादिशब्दशक्तिग्रहः स्यात् । अथवा आख्यातप्रत्ययस्योभयत्र यथा शक्तिस्वीकारः तथाऽत्रापि गङ्गायामित्यस्यैव प्रवाहे तीरे च शक्तिरेव इति स्यात्।

तस्मात् आख्यातप्रत्ययः यत्नवाचकः । तदत्र अनुमानप्रयोगः – "लडाख्यातं यत्नवाचकम् आख्यातत्वात् लिङाख्यातवत्" इति ।

## तर्कताण्डवे मणिभङ्गः

यदेवं चेतनाचेतनसाधारण्येन प्रयोगे सत्यपि लाघवमात्रेण कृतित्वस्य शक्यतावच्छेदकत्वकल्पनं तदतिप्रसक्तम् । तथा हि – कारणादिशब्दाः अनन्यथासिद्धनियतपूर्ववर्तिनि प्रयुज्यन्ते । यथा घटं प्रति दण्डः कारणमित्युक्ते दण्डः अनन्यथासिद्धनियतपूर्ववृत्तिः इत्यर्थः । अत एव प्रयोगबलात् कारणशब्दस्य तदर्थकत्वं स्वीक्रियते । तत्र लाघवेन सत्ताजातिविशिष्ट एव कारणशब्दार्थः स्यात् । वाच्यतावच्छेदिका च सत्ताजातिः स्यात्, त्वदुक्तरीत्या । तथा हि – सत्ता च जातिरूपा इति अखण्डा सा । त्वदुक्तं च कारणत्वम् अनन्यथासिद्धनियतपूर्ववृत्तित्वरूपं सखण्डं गुरुभूतशरीरोपेतम् । तर्हि सामान्यादिषु कथं कारणत्वव्यवहारः? यथा घटत्वादिसामान्यं व्यावृत्तिबुद्धिं प्रति कारणम् इत्युच्यते । एवं समवायः इह पटः इत्यादि प्रतीतिं प्रति कारणम् । विशेषाश्च परमाणुभेदबुद्धिं प्रति कारणम् इत्यादिः । अत्र सर्वत्र सत्तारहितत्वेन कथं कारणपदप्रयोगः? यत इदानीं कारणपदार्थः सत्ताविशिष्ट इति । तत्रोच्यते – कारणपदं तत्र लाक्षणिकम् । यथाऽचेतने आख्यातो लाक्षणिकः इति ।

ननु शब्दस्येदं प्रवृत्तिनिमित्तमिति कथने प्रयोगप्रत्ययौ अपेक्षितौ । न ताभ्यां विना तत्सिद्धिर्दृष्टा । प्रकृते च कारणपदप्रयोगाद् वा कारणपदजायमानप्रतीत्या वा सत्ता न विषयीक्रियत इति कथं सत्तायाः शक्यतावच्छेदकत्वम्? अर्थात् कारणपदात् इदं सत् इति प्रतीतिरेव नोदेति इत्याक्षेपः ।

समाधानम् – तुल्यन्यायेन भवत्पक्षेप्ययमाक्षेपः । आख्यातपदप्रयोगमा-

त्रेण किं यत्नः प्रतीयते? नैव । अचेतनकर्तृकस्थले तत्सत्वेपि तदभावात् । आख्यातपदसत्वेऽपि यत्नप्रतीत्यभावात् इति यावत्। परन्तु आख्यातपदसत्वे सर्वथा यत्नप्रतीतिः न भविष्यतीति वदामः । तर्हि कुत्र प्रतीतिः? इत्युक्ते तदेवम् – यत्राख्यातं चेतनकर्तृकधात्वर्थवाचकपच्यादिसमभिव्याहृतं तत्र तस्माद् यत्न एव प्रतीयते । एवञ्च किञ्चिद् व्यक्तिविशेषनियन्त्रिताख्यातेन यत्नप्रतीत्या आख्यातस्य तदर्थकत्वं समर्थ्यते । एवमत्रापि कारणम् इति पद-प्रयोगमात्रेण सत्ताविशिष्टप्रतीत्यभावेऽपि सामान्यादीतरत् कारणम् इति सा-मान्यादीतरशब्दसमभिव्याहृतकारणपदेन अवश्यं सत्तायाः प्रतीतेः जायमान-त्वेन कारणपदस्य सत्ताविशिष्टार्थकत्वमपि युक्तं स्यात् ।

वस्तुतः पचिसमभिव्याहृताख्यातेनापि नैव यत्नधीः जायत इति अग्रे नि-रूप्यत इति नेयमाशङ्का युज्यते । अत एव तत्समाधानकरणमपि आवश्यकम् न इति ध्येयम् ।

आक्षेपः – सामान्यादीतरत्कारणम् इत्यादौ सत्ताप्रतीतिः भवतीति तु सत्यम् । परन्तु सा प्रतीतिः आक्षेपबलात् लभ्यते । आक्षेपकं च सामान्यादी-तरत् इति पदम् । तदर्थः सामान्यादिप्रतियोगिकभेदविशिष्टः इति । भेदश्च सामान्यापेक्षया तदितरद्रव्यगुणकर्मणां च सत्तारहितत्वेन रूपेण । अतः का-रणशब्दार्थः न सत्ताविशिष्ट इति सत्तायाः न शक्यतावच्छेदकत्वम् ।

परिहारः – तर्हि तुल्यन्यायेन पचति इत्यादावपि यत्नप्रतीतिः पचिसम-भिव्याहृतबलात् आक्षेपात् इति युज्येत । ननु अस्ति वैषम्यम् तथाहि – व्या-पारस्य पचतीति प्रयोगात्प्रतीतिः, तदनन्तरं कृतेः प्रतीतिरिति प्रतीतिद्वयानु-भवः स्यादिति आख्यातार्थस्य यत्नार्थकत्वमेवेति शक्त्येव तत्प्रतीतिः न तु आक्षेपादिति आक्षेपः । तत्रोच्यते – प्रतीतिद्वयापादनं च इष्टमेव ।

आक्षेपः – यथा व्यापारेण कार्येण यत्नरूपं कारणम् आक्षेपबलाल्लभ्यते इत्युच्यते वैपरीत्येन कारणबलात् यत्नरूपात् कार्यो व्यापारः आक्षिप्यत इति अङ्गीक्रियताम् । यतो हि द्वेधापि दृष्टः । कार्येण कारणाक्षेपः, कारणेन च कार्याक्षेपः इति । यथा धूमेन वह्नेराक्षेपः । विशिष्टमेघोन्नतेः वृष्टेराक्षेपः ।

समाधानम् – कारणेन कार्यमाक्षिप्यते इति तु सत्यम् । कारणं च समग्रम् एव कार्यमाक्षिपति । न तु कारणैकदेशः। अत एव **प्रमाणपद्धतौ 'कारणं तु समग्रमेव कार्यमनुमापयति'** इत्युक्तम् । अत्र प्रकृते न यत्नमात्रं व्यापारकारणम् । अपि तु ईश्वरेच्छादिसामग्र्युपेतः यत्नः । यथा केवलेन दण्डेन घटाक्षेपः न युज्यते । अपि तु कारणसामग्रीसहितेन दण्डेन । तथा अत्रापि न आख्यातार्थस्य यत्नरूपत्वं स्वीकृत्य तदाक्षेप्यत्वं व्यापारस्य युज्यते । अतः "पचति" इत्यादिस्थलेषु आख्यातस्य व्यापारार्थकत्वमेव ।

आक्षेपः – "पचति" इत्यादौ न व्यापारेण यत्नाक्षेपो युक्तः । तथाहि आख्यातप्रत्ययसत्वे यत्नमविहायैव व्यापारप्रतीतिः, तदभावे तु व्यापारप्रतीतेरप्यभावः इत्यन्वयव्यतिरेकयोः दृष्टत्वेन व्यापारकारणीभूतस्य अवश्यमङ्गीकार्यस्य यत्नस्यैवाख्यातार्थत्वं युक्तम् ।

समाधानम् – अन्वयव्यतिरेकयोः व्यभिचारात् । तथा हि – पचतीति प्रयोगे यत्नविरामेपि शरीरव्यापारः प्रतीयते । अत्रेदं बोध्यम् – ज्ञानम् इच्छा कृतिः व्यापारः इति क्रमः । अत्र व्यापारदशायां कृतेः व्यक्त्यात्मना स्थितिः भवेदेव इति नियमो न । तस्य संस्काररूपेण स्थित्यङ्गीकारात् । अयमेव च यत्नविरामः इत्युच्यते । तत्कालेपि यत्नकार्यस्य व्यापारस्य अधःसन्तपनरूपधात्वर्थानुकूलस्य शरीरकृतस्य आत्मनः सत्वात् । एवञ्च आख्यातपदप्रयोगे तदभावेपि तत्सत्वम् इति व्यतिरेकव्यभिचारः प्रदर्शितः । अपि च स्थितेऽपि

यत्ने व्यापाराभावकाले पचतीति अप्रयोगाच्च । यथा आमवातादिशिथिली-कृतकळेवरे अथवा निगडनिश्चलदेहे ।

अन्यथा यत्नस्यैवाख्यातार्थत्वे निगडनिश्चलदेहस्थले देवदत्तः विमोचितुं प्रयतते इति प्रयुज्यते । न तु विमुच्यत इति। एवं यत्नसत्वेपि तदभावप्रतीतेः अन्वयव्यभिचारोऽपि । अतः व्यापारेण यत्नाक्षेपः इति युज्यते।

आक्षेपः – यत्नस्य आक्षेपपक्षे बाधकमस्ति । तथाहि – यदि यत्नः व्यापारेणाक्षिप्तः तदा अशाब्दे यत्ने कथं शाब्दस्य "पचति" इत्यत्र लट्प्रत्य-यार्थस्य अन्वयः? 'अशाब्दः शाब्देनानन्वितो भवति' इति न्यायविरोधात् । न च यत्नस्याशाब्दत्वं कथम्? इति वाच्यम् । तस्य आक्षिप्तत्वात् । आक्षिप्तस्य च शब्दशक्त्यलब्धत्वेन अपि तु अर्थापत्तिलब्धत्वेन अशाब्दत्वम् । वर्तमानत्वं च शाब्दमेव वर्तमाने लट् इति अनुशासनात् । लडादेशत्वेन तिपोपि तदर्थबो-धकत्वात् इत्यवधेयम्।

समाधानम् – न यत्नमात्रमत्राक्षिप्यते, अपि तु वर्तमानत्वविशिष्ट एव यत्नः । तदित्थम् – आक्षेपकं च प्रकृते शाब्दवर्तमानत्वान्वितः पच्यादिरूप-धात्वर्थः अथवा शाब्दवर्तमानत्वान्वितः धात्वर्थानुकूलव्यापाररूपाख्यातार्थः इति हेतोः तादृश एव पदार्थः आक्षिप्यत इति भावः । एष आक्षेपकाक्षेप्यभावः अभ्युपेत्य उक्तः इति ज्ञेयः । वस्तुतस्तु "पचति" इत्यादौ यत्नोपि व्यापार-त्वेनैव प्रतीयते, न तु यत्नत्वेनेति व्यापरस्य न यत्नाक्षेप- कतापि । व्यापार-त्वेनैव यत्नप्रतीतेः स्वीकारात् ।

अपि च पूर्वोक्तः शक्त्यतिरिक्तवृत्त्यन्तरोच्छेदोऽपि न । तथाहि – रथो गच्छतीत्यादौ आख्यातस्य न लाक्षणिकत्वं स्वीक्रियते । यतः लक्षणास्वी-कारः तत्रैव युज्यते यत्र पूर्वं प्रयोगप्राचुर्यनिगमनिघण्ट्वादिना शक्तिः क्लृप्ता ।

उदाहरणम् – गङ्गाशब्दस्य गङ्गायां मीनः इत्यादि प्रयोगप्राचुर्यबलात् अभिधानादिवशाच्च प्रवाहे शक्तिः क्लृप्ता । अतस्तदन्यत्र गङ्गायां घोषः इत्यादिषु प्रवाहतीरयोः सम्बन्धसद्भावात् लक्षणा स्वीक्रियते । प्रकृते यत्ने आख्यातस्य शक्तिः प्रयोगप्राचुर्यादिना न क्लृप्ता । अतः नान्यत्र आख्यातस्य लाक्षणिकत्वं युक्तम् । एवं कथनेन 'न च मुख्ये सम्भवति गौणार्थत्वं युक्तम्' इति पूर्वोक्तः ग्रन्थभागः समर्थितः वेदितव्यः ।

अतः सर्वत्र आख्यातप्रयोगस्थले शक्यतावच्छेदकत्वम् अर्थात् प्रवृत्तिनिमित्तत्वं धात्वर्थानुकूलव्यापारस्यैव इति आख्यातस्य तदर्थकत्वे सम्भाविते 'चेतने तु मुख्यः अचेतनेत्वमुख्यः' इति वृत्तिद्वयकल्पना अन्याय्या –

## अत्र सुधाविरोधपरिहारः

**न्यायसुधायां** रचनानुपपत्त्यधिकरणे समयपादे –

**स्वेच्छानुसारितामेव स्वातन्त्रं हि विदो विदुः ।**

एतद्व्याख्यानावसरे 'वृक्षः तिष्ठति' इत्यादौ कर्तृत्वव्यवहारो गौणः इति वचनम् दृश्यते । अत्र तु चेतनाचेतनसाधारण्येन आख्यातः मुख्य एव । अतः मुख्येऽर्थे सम्भवति अमुख्यार्थः न ग्राह्यः । इति सर्वत्र धात्वर्थानुकूलव्यापारार्थकत्वं तद्वृत्तिधात्वर्थानुकूलव्यापारत्वं च प्रवृत्तिनिमित्तम् । एवंरीत्या वृक्षस्तिष्ठतीति प्रयोगेऽपि धातूपात्तव्यापाराश्रयत्वस्य वृक्षे अबाधितत्वेन तस्य गौणत्वं न युज्यते । पूर्वप्रघट्टके अन्तिमे स एव प्रधानः दोषोक्तः वृत्तिद्वयकल्पनमयुक्तमिति **ताण्डवे** । अतः परस्परं ग्रन्थविरोधः ।

तदत्र **न्यायदीपे (राघवेन्द्रतीर्थविरचिते)** विरोधः परिहृतः — **सुधायां तु** कर्तृत्वविशेषमादाय वृक्षस्तिष्ठतीत्यत्र गौणत्वमभ्युपेत्योक्तम् । तत्र

कर्तृत्वम् इच्छाधीनकृतिमत्वम् इति स्वीकार एव प्रधानस्य जगज्जन्मादिकारणत्वं वारयितुं शक्यते । प्रधानस्य जडत्वेन इच्छाधीनकृत्यसम्भवात् । अन्यथा प्रधानस्य जगज्जन्मादिकारणत्ववारणमशक्यम् । एतदभिप्रेत्य वृक्षस्तिष्ठति इत्यत्र वृक्षस्य कर्तृत्वव्यवहारः गौणः । परं व्यापारवत्वस्य कर्तृत्वे वृक्षेऽपि सम्भवतीति तत्रत्याख्यातस्य मुख्यत्वमेव । अतः न परस्परं ग्रन्थविरोधः ।

## वृक्षस्तिष्ठतीतिविषये सुधायां तद्व्याख्याने च

द्वितीयाध्याये द्वितीयपादे **रचनानुपपत्त्यधिकरणे –**

**"स्वेच्छानुसारितामेव स्वातन्त्र्यं हि विदो विदुः ।.. (अ.व्या)**

विदो विदुः इत्यनेन सकलविद्वत्सम्मतमेतदित्याह । अत एव हि स्वातन्त्र्याभावात् वृक्षस्तिष्ठतीत्यादि कर्तृत्वव्यवहारः गौणः इति सर्वे प्रतिपन्नाः ।"

**अत्र शेषवाक्यार्थचन्द्रिकायाम्** – सकलविद्वत्सम्मतत्वे ज्ञापकमाह अत एवेति ॥ प्रवृत्तौ स्वेच्छानुसारिताया एव स्वातन्त्र्यशब्दार्थत्वादेवेत्यर्थः । स्वातन्त्र्याभावात् ॥ प्रवृत्तौ स्वेच्छानुसारित्वाभावात् इत्यर्थः । वृक्षस्तिष्ठतीत्यादिपदेन वृक्षेण स्थीयते इत्यादेः परिग्रहः । सर्वे न्यायवाचस्पत्युदयनादयः प्रवृत्तौ स्वेच्छानुसारित्वस्यैव स्वातन्त्र्यरूपत्वसम्मतेरेव वृक्षस्तिष्ठतीत्यादिकर्तृत्वव्यवहारस्य वृक्षादीनां प्रवृत्तौ स्वेच्छानुसारित्वाभावेन मुख्यत्वासम्भवात् तृतीयादिप्रयोजकपारिभाषिकवैय्याकरणाभिमतकारकान्तरानपेक्षत्वरूपामुख्यकर्तृताया सत्त्वात् उक्तविधकर्तृत्वव्यवहारस्य गौणतोक्तिः तेषां सङ्गच्छते । अन्यथा तु कारकान्तरानपेक्षत्वरूपकर्तृतायाः वृक्षस्तिष्ठतीत्यादपि सत्वात् तद्व्यवहारस्य गौणतोक्तिः अयुक्तं स्यादिति द्रष्टव्यम् ।

यद्यपि वृक्षस्याचैतन्यपक्षे तत्र मुख्यकर्तृत्वाभावात् । तद्व्यवहारस्य गौणत्वप्राप्तावपि चैतन्यपक्षे मुख्यमेव कर्तृत्वं सम्भवतीति तद्व्यवहारस्य अमुख्यत्ववर्णमनुचितम् । तथापि अत्र अतद्गुणसंविज्ञानबहुव्रीहिणा घटस्तिष्ठति, घटेन स्थीयते इत्यादेः औपचारिकव्यवहारत्वेनाभिमतत्वात् नानुपपत्तिः । अत एव न्यायवाचस्पतिना घटस्तिष्ठतीति औपचारिकप्रयोगः इत्येव उक्तमित्यवधेयम् । वस्तुतः चैतन्येऽपि वृक्षस्य स्वस्थित्यनुकूलेच्छाप्रयत्नसद्भावे मानाभावात् न मुख्यकर्तृत्वमिति यथाश्रुत एवायं ग्रन्थः साधुः ।"

**वाक्यार्थरत्नमालायां** – न्यायवाचस्पत्युदयनादयः इति ॥ न्यायपञ्चाध्यायी न्यायभाष्यव्याख्यानन्यायवार्तिकव्याख्याने न्यायवाचस्पतिमिश्राः तद्वाचस्पतिव्याख्यावसरे च उदयनः । आदिपदेन उदयनकृततात्पर्यशुद्धिव्याख्यानकर्तृवर्धमानपरिग्रहः इति ज्ञेयम् ।

... तत्र भाष्ये वृक्षस्तिष्ठतीति स्वातन्त्र्यात् कर्ता इति वृक्षस्य स्वातन्त्र्यं युक्तम् । तत्र वार्तिककारेण किं पुनः वृक्षस्य स्वस्थितौ स्वातन्त्र्यम्? इत्याशङ्क्य कारकान्तरानपेक्षत्वम् इति प्रतिपादितम् । तत् वाचस्पतिनापि कारकान्तरानपेक्षस्य हि प्रयोजकतया कथञ्चित् स्वातन्त्र्यं विवक्ष्यते । तदनपेक्षस्य नितरां स्वातन्त्र्यमिति प्रतिपादितम् । तदुदयनेनापि स्वातन्त्र्यं युक्तमिति वाक्ये वैय्याकरणमतमाश्रित्य उत्तरयता तदुपपादयति कारकान्तरानपेक्ष्यस्य हीत्यवतारः कृतः । ननु कारकान्तरानपेक्षत्वम् अजनकसाधारणम् । नैय्यायिकानामकर्तृत्वं तत्किमर्थमुपपाद्यते इत्यत आह – वैय्याकरणेतीत्येवं वर्धमानेनापि अवतारः कृतः इति । कथं तेषां स्वप्रवृत्तौ स्वेच्छाधीनत्वरूपस्वातन्त्र्यसम्मतिः उदाहृतग्रन्थाद् ज्ञायते इत्यतः अन्यथानुपपत्त्या इत्याशयेनाह – स्वप्रवृत्तौ स्वेच्छेति ॥ सम्मतेरेवेत्यस्य उक्तविधकर्तृत्वस्य व्यवहारस्य गौणत्वोक्तिः तेषां सङ्गच्छत इति सम्बन्धः । सम्मतस्वातन्त्र्याभावं वृक्षादौ उप-

पादयति – "वृक्षस्तिष्ठति" इत्यादि कर्तृत्वव्यवहारस्येति ॥ मुख्यत्वासम्भ-वादित्यनेन सम्बन्धः । तत्र हेतुः वृक्षादीनामिति ॥ अत्र कर्तृत्वपदं स्वातन्त्र्य -परम् । समानार्थतया परग्रन्थ इव सङ्करेण व्यवहारः इत्यदोषः । गौणकर्तृ-त्वस्वरूपविवरणपूर्वकं तत्सम्भवमाह तृतीयादीति ॥ आदिना प्रथमा- षष्ठी-परिग्रहः । प्रयोगक्रमस्य अविवक्षितत्वादेव असदधिकरणमूले 'वृक्षेण स्थीयते इत्यादौ' इत्युक्तेऽपि इह मूले 'वृक्षस्तिष्ठती इत्यादौ' इत्युक्तमिति टीकायामपि अव्यवस्थया उक्तिरिति न विरोधः । अमुख्यकर्तृताया इति ॥ अमुख्यकर्तृ-तायाश्च इति योज्यम् । पञ्चम्यन्तद्वयं गौणतोपपादकम् । यद्यपि वृक्षादीनां गौणः कर्तृत्वव्यवाहरः परेषां मुखतः नोक्तिरस्ति । तथाऽपि मुख्यं नैय्यायि-कादिमतं कार्यत्वमनुपादाय अजनकसाधारणं वैय्याकरणाभिमतं कर्तृत्वमुपा-दाय च कर्तृत्वोपपादनम् उक्तव्यवहारस्य गौणत्वकथने एव पर्यवसन्नमिति भावेन तथोक्तिः । अत एव वर्धमानकृता चिकीर्षाकृतिसमवायित्वं कर्तृत्वमि-ति निष्कर्षो दर्शितः । अत एव प्राक् उक्तकारकान्तरानपेक्षत्वस्य कर्तृत्वरूप-त्वं तिष्ठतेः गतिनिषेधवचनत्वपक्षे इति प्रतिपाद्य पदाप्यस्तेरभिधायकम् इत्या-दिपक्षान्तराणी वार्तिकोक्ता व्याकुर्वता वाचस्पतिना गेहे घटोस्तीति औपचारिकप्रयोगः इत्युक्तम् । तथोक्तप्रकाराणां फलं कथयता उदयनेनापि तदेवमुक्तेष्वपि पक्षेषु अनपेक्षतया वृक्षादीनां कर्तृत्वं यद्यपि व्युत्पादितं तथापि उपचारमेतदिति मन्तव्यमिति प्रतिपादितम् । तच्च वर्धमानेनेवम् अवतारितम् – ननु उक्तकर्तृत्वप्रकारेषु चेतनाचेतनसाधारणं कर्तृत्वं व्यवस्थापितम् । तथा च क्षित्यादिकर्त्रनुमाने अवयवानामेवासमवायिकारणसंयोगहेतुक्रियावतां कर्तृत्वेनोपपत्तौ चेतनेन सिद्ध्येदित्यन्तमाह – तदेवमितीति ॥ ततोऽप्युप-चारः आश्रितः इति गम्यत इति ज्ञेयम् । अन्यथेति ॥ उक्तस्वातन्त्र्यस्य ते-षामसम्मतत्वे वैय्याकरणोक्तस्यैव च सम्मतत्वे इत्यर्थः । वर्धमानोक्तरीत्या

आशङ्कते – यद्यपि वृक्षस्येत्यादि ॥ समाधिं स्वयमाह तथाप्यत्रेति ॥ घट-स्तिष्ठतीत्यौपचारिक इति ॥ यद्यप्येवं न वाचस्पत्युक्तम् । तथापि गेहे घटो-स्तीत्यौपचारिकप्रयोगः इति तदुक्तिं मनसि निधाय तिष्ठतेश्च अस्त्यर्थत्वमुपा-दाय इदमुक्तमित्यादि द्रष्टव्यम् । वर्धमानोक्तरीत्यापि समाधानमाह – वस्तु-तश्च चैतन्येपीत्यादिनेति, सर्वम् अवदातम् । असदधिकरणीयबुद्धि-पूर्वकप्रवृत्तिरिति कर्तृत्वम् इत्यनुव्याख्यानमूलटीकापि एवमेव व्याख्येया इति ज्ञेयम् ।

**सत्यव्रतीये** – "वृक्षः इति ॥ धात्वर्थानुकूलव्यापारवत् कर्तृत्वस्यापि आख्यातार्थत्वात् । वृक्षस्तिष्ठतीत्यत्र धात्वर्थानुकूलव्यापाररूपाख्यातार्थस्य मुख्यत्वेऽपि कर्तृत्वरूपतदर्थः न मुख्यः इत्यर्थः ।"

**परिमळे** – "नन्वेवं सति स्वतन्त्रः कर्ता इति पाणिन्युक्तदिशा स्वात-न्त्र्यरूपकर्तृत्वस्य वृक्षादौ अचेतने अभावात् तत्र कर्तृवाचितिङ्प्रयोगः न स्यादित्यत आह – अत एव हि इति ॥ तर्कताण्डवे तु आख्यातवादे मण्या-द्युक्त आख्यातकृत्यर्थत्वभङ्गे 'रथो गच्छती'त्यादि प्रयोगोऽपि मुख्य एव इत्यु-क्तिस्तु व्यापारवत्वं कर्तृत्वमित्युपेत्येत्यविरोधः ।"

**यादुपत्ये** – "गौणः इतीति ॥ यत्तु तर्कताण्डवे वृक्षस्तिष्ठतीत्यादावपि कर्तृत्वव्यवहारः मुख्य एवेति समर्थितम् । तत् धात्वर्थानुकूलव्यापारे प्राधान्य-मेव स्वातन्त्र्यं न तु कृतावेवेति नियमः । तदेव च कर्तृत्वमित्यभिप्रेत्य अतः न विरोधः" ।

**श्रीनिवासतीर्थीये** – "गौणः पारिभाषिकः"

* * * * *

## तर्कताण्डवोक्तविषये चन्द्रिकायाम्

चन्द्रिकायाम् द्वितीयाध्याये प्रथमपादे **असदधिकरणे** – "दृश्यते च अचेतनेऽपि कर्तरि विहिततृतीयादि । अशरीरत्वेऽपि ईश्वरस्योपादानत्वेऽपि ब्रह्मण इव च जीवस्यापि चेतनत्वेऽपि ईश्वरमात्रस्यैवाभावत्वेऽपि विश्वप्रागभावस्य कर्तृत्वमस्तु । 'तदसदेव सन्मनोऽकुरुत' इति श्रुतौ असच्छब्दार्थस्य विश्वप्रागभावस्य मनःशब्देन वा कर्त्रर्थलकारेण वा ज्ञानेच्छाद्युक्तेश्च" इत्यस्ति ।

**अत्र प्रकाशे (राघवेन्द्रतीर्थविरचिते)** – 'चैत्रेण स्थीयते' इत्यादौ कर्तृकरणयोस्तृतीया इति विहितकर्त्रर्थकतृतीया कर्तृत्वाभावेन स्यादित्यर्थः । न तृतीयादियोगित्वमात्रं कर्तृत्वम् । किन्तु इच्छादियोगित्वमेव प्रकृतोपयुक्तमित्यत आह – अशरीरत्वेऽपीति ॥ .... कर्त्रर्थेति ॥ लः कर्मणि च भावे चाकर्मकेभ्यः - इत्यत्र चकारात् कर्तर्यपि लकारविधानादिति भावः । - इति ।

अत्रैव अग्रे सिद्धान्तनिरूपणावसरे **चन्द्रिकायाम्** –" सिद्धान्तमाह – सिद्धान्तयत् इति ॥

अयं भावः –

**न तृतीयादियोगित्वं कर्तृतेह विवक्ष्यते ।**
**किन्तु ज्ञानादियोगित्वं तच्चाभावेन युज्यते ॥**

न हि जन्मादिसूत्रोक्तं कर्तृत्वं तृतीयादिप्रयोजकम् । वैय्याकरणाभिमतपारिभाषिकं कर्तृत्वम् । किन्तु ज्ञानचिकीर्षादिमत्वम् । न च चेतनत्वम् अचेतनप्रभेदे प्रागभावे युक्तम् । अन्यथा ईश्वरस्यैव प्रागभावः इति सञ्ज्ञा स्यात् ।" – इति ।

## असदधिकरणे सुधायाम् तद्व्याख्याने च

### “बुद्धिपूर्वप्रवृत्तिर्हि कर्तृत्वमिति निश्चितम्” – (अ.व्या.)

सुधायां द्वितीयाध्याये प्रथमपादे **असदधिकरणे –**

“प्रवृत्तिः इच्छाप्रयत्नादिका .... वृक्षेण स्थीयतेत्यादौ कर्तृत्वं पारिभाषिकम् । न तु स्वाभाविकम् इति सर्वेऽपि प्रतिपन्नाः ।...... तथाहि – स्यात् कर्तृनिषेधैकस्वरूपत्वयोः अविरोधः । यदि तृतीयादिविषयत्वमेव कर्तृत्वं स्यात् । न चैतदस्ति । अपि तर्हि इच्छाप्रयत्नादिरूपा प्रवृत्तिरेव सर्वैरपि परीक्षकैः तस्या एव कर्तृत्वेन निश्चितत्वात् । प्रकरणाच्च एतदेव निश्चितम् । अत्रैव हि विप्रतिपत्तिः नान्यत्र” इति ।

अत्र **शेषवाक्यार्थचन्द्रिकायाम्** – प्रवृत्तिशब्दस्य प्रयत्नमात्रार्थत्वप्रतीतिनिरासायाह – इच्छाप्रयत्नादिकेति ॥ प्रयत्नानन्तरभावि आत्मपरिस्पन्दसङ्ग्रहाय आदिपदम् । अत एव .... ननु इच्छादियोगित्वरूपकर्तृत्वस्य चेतनमात्रनिष्ठत्वेन अचेतनसाधारणत्वाभावात् अननुगमः इत्यतः अचेतनस्य कर्तृताया एव अभावात् न तदननुगमः दोषायेत्यभिप्रेत्य तथा सति अचेतने कर्तरि विहितत्वात् तृतीयादेः वृक्षस्तिष्ठति वृक्षेण स्थीयते इत्यादि व्यवहारो न स्यादित्यतः अचेतनस्य इच्छादियोगित्वरूपमुख्यकर्तृत्वाभावेऽपि तृतीयादिप्रयोजकपारिभाषिकवैय्याकरणाभिमतकारकान्तानपेक्षत्वरूपामुख्यकर्तृतायाः सत्वात् उक्तविधकर्तृत्वव्यवहारः गौण एवेत्यभिप्रेत्य तद्गौणतायां न्यायवाचस्पत्युदयनादिसम्मतिमाह वृक्षेणेति ॥ आदिपदेन वृक्षस्तिष्ठतीत्यादेः सङ्ग्रहः ।

यद्यपि वृक्षस्याचैतन्यपक्षेऽपि तत्र मुख्यकर्तृत्वाभावात् तद्व्यवहारस्य गौणत्वप्राप्तावपि चैतन्यपक्षे मुख्यमेव कर्तृत्वं सम्भवतीति तद्व्यवहारस्यामु-

ख्यत्ववर्णनमनुचितम् । तथापि अत्र अतद्गुणसंविज्ञानबहुव्रीहिणा घटस्तिष्ठ-ति, घटेन स्थीयतेत्यादेरेव औपचारिकव्यवहारत्वेनाभिमतत्वात् नानुपपत्तिः । अत एव न्यायवाचस्पतिना घटस्तिष्ठतीति औपचारिकप्रयोगः इत्येवोक्तमित्य-वधेयम् । वस्तुतः वृक्षस्य स्वस्थित्यनुकूलेच्छाप्रयत्नसद्भावे मानाभावात् न मुख्यकर्तृत्वमिति यथाश्रुत एवायं ग्रन्थः साधुः ।

**सत्यव्रतीये** – वृक्षेण स्थीयतेत्यादौ इति ॥ न चात्र घटस्तिष्ठति इत्या-दिकमेवोदाहर्तुं योग्यमिति तत्परिहारेण वृक्षेण स्थीयतेत्यस्योदाहरणे किं नि-मित्तमिति वाच्यम् । तत्र प्रातिपदिकार्थलिङ्गपरिमाणवचनमात्रे प्रथमा इति स्मरणात् प्रातिपदिकार्थे एव प्रथमा इति वक्तुं शक्यत्वेन परेणोदाहर्तुं शक्य-त्वात् वृक्षेण इत्यत्र तत्करणत्वाभावेन तत्र तृतीयायाः अयोगात् कर्तर्येव तृतीयायाः वाच्यत्वात् कर्तृत्वसिद्धिः इत्यभिप्रायेण एतदुपपत्तेः । अत्र वृक्षपदं जडपरम् इति ध्येयम् ।

**परिमळे** – "पारिभाषिकमिति ॥ स्वतन्त्रः कर्ता इति पाणिन्युक्तेः स्थितिरूपक्रियां प्रति स्वातन्त्र्यरूपं कर्तृत्वं पाणिनिपरिभाषितमेवेति न सर्व-सम्प्रतिपत्तिरिति भावः । ... प्रकरणादिति ॥ जन्मादिसूत्रोक्त- कर्तृत्वस्यैव पूर्वोत्तराधिकरणयोः विचारस्यैव प्रवृत्तेरिति भावेन प्रकरणात् इत्युक्तं व्यनक्ति – अत्रैव हीति ॥ यद्वा, विवादविषयत्वाच्च एतदेव कर्तृत्वमुपादेयं नान्यदिति भावेनाह अत्रैव हीति ॥"

**यादुपत्य** – तृतीयादिविषयत्वमेवेति ॥ .... अत्रादिपदेन तिङादियु-क्तप्रथमा कृत्युक्तषष्ठी च ग्राह्या ।

**श्रीनिवासतीर्थीये** – स्यादिति ॥ तथा च प्रागभावेन स्थीयत इति प्र-योगात् तस्याप्येतादृशं कर्तृत्वं भवेदित्यर्थः । अतः नात्र परस्परं ग्रन्थविरोधः शङ्कनीयः । एवं मणिकारमतं खण्डितं तर्कताण्डवे ।

## तर्कताण्डवे रत्नकोशकारमतानुवादः

एतेषां मते "पचति" इत्यत्र पच्धात्वर्थः पाको नाम अधःसन्तपनादिरूपव्यापारः । तिप्प्रत्ययार्थश्च कृतिः। अर्थादुत्पत्तिः । तथाहि – चैत्रः"पचति" इत्यस्य चैत्रःपाकमुत्पादयति इति विवरणात् उत्पत्त्यर्थकत्वमाख्यातस्य स्वीक्रियते । तर्हि उत्पत्त्यर्थकत्वे आख्यातस्य कथमस्माद् वाक्याद् बोधः । तथाहि –

धात्वर्थः अधःसन्तपनादिव्यापारः । तेन सह आधेयतया कृतेरन्वयः । अर्थात् धात्वर्थनिष्ठ-अधिकरणतानिरूपिता या आधेयता तदाश्रया कृतिः । उत्पत्तिरिति यावत् । अभिप्रायः अयम् – पाकस्योत्पत्तिः जायते इत्युक्ते उत्पत्त्यधिकरणं भवति पाकः इति । पाकाश्रितोत्पत्तिः इति यावत् । अथ च कृतेः प्रातिपदिकार्थेन चैत्रेण सह कार्यतयान्वयः । अर्थात् कृतिनिष्ठकार्यतानिरूपितकारणतावान् चैत्रः । अत्र कृतिशब्देन सर्वत्रोत्पत्तिरेवाभिप्रेतः । तत्कारणं च चैत्रः । अत एवमन्वयः। एवमत्र मूलग्रन्थे कार्यतया कृतेरन्वयादिति कथनेन एवमपि बोधः भवितुमर्हति । चैत्रनिष्पाद्या पाकोत्पत्तिरिति । अथवा पाकोत्पत्तिकारणं चैत्रः इति। यद्यप्यत्र आख्यातस्य उत्पत्तिमात्रमर्थः, न तु उत्पत्तिकारणत्वम् । अथापि चैत्रादिपदसमभिव्याहारबलेन कार्यकारणभावः संसर्गरूपेण भासते इति बोध्यम् । तथैव पाकोत्पत्त्योश्च आश्रयाश्रयिभावोऽपि ।

वस्तुतः विवरणवाक्यात् शक्यस्यैव विवरणमिति न नियमः इत्यादयः पूर्वोक्तदोषाः एतेषां मते सन्त्येव। तैः साकं वक्ष्यमाणदोषा अपि सन्तीति ज्ञेयम्।

अथवा प्रकारान्तरेणाख्यातार्थं विवृणोति रत्नकोशकारः । तथाहि –

पूर्वस्मिन् स्थले उत्पत्तेराख्यातार्थत्वे तस्य प्रथमान्तार्थे अन्वयाय आश्रयाश्रयिभावसंसर्गज्ञानमावश्यकम् । अत्र तु मते न तथा । आख्यातार्थः उत्पादनैव । उत्पादना नाम उत्पादकनिष्ठः धर्मविशेषः । एवञ्च "चैत्रः पचति" इत्यत्र पाकविषयिणी या उत्पादना तद्वांश्चैत्रः इति बोधः । सा च उत्पादना प्रातिपदिकार्थे आश्रिततयान्वेति । धात्वर्थेन विषयितयान्वेति । यथा – धात्वर्थे पाके भावनायाः स्वनिष्ठविषयतानिरूपितविषयितासम्बन्धेनान्वयः । एवं प्रातिपदिकार्थे चैत्रे भावनायाः स्वनिष्ठाधेयतानिरूपिताश्रयतासम्बन्धेन अन्वयः । अस्त्वेवमुक्तौ को लाभः? इत्यतः धात्वर्थोत्पादकता चेतनाचेतनसाधारण्येन अस्तीति 'रथो गच्छति', 'चैत्रो गच्छति', 'वह्निः दहति' इत्यादिषु आख्यातस्य मुख्यार्थत्वरूपो लाभः इति । परपक्षे तु अस्ति बाधकम् । यः व्यापारः अथवा यत्नः आख्यातार्थः इति मनुते तस्य यतते जानातीत्यादिप्रयोगेषु आख्यातार्थस्य धात्वर्थे विषयितयान्वयस्य वक्तुमशक्यत्वात् । तथाहि – यतत इत्यत्र आख्यातार्थस्य यत्नस्य स्वनिष्ठविषयितानिरूपितविषयितासम्बन्धेन धात्वर्थे यत्नेऽन्वयो वाच्यः । परं यत्ने यत्नविषयकत्वं बाधितम् । अथ जानातीत्यत्र धात्वर्थस्य व्यापारस्य स्वनिष्ठविषयितानिरूपितविषयतासम्बन्धेन धात्वर्थे ज्ञानेऽन्वयः वक्तव्यः । परं ज्ञानविषयकत्वं कस्मिन्नपि व्यापारे नास्ति । अतः एतादृशस्थले केवलं शब्दसाधुत्वं स्यात् ।

उत्पत्त्यर्थकत्वमते तूपपत्तिरस्ति । तथाहि – यत्नज्ञानयोः स्वविषयकत्वासम्भवेऽपि तयोरुत्पत्तिसम्भवेन अर्थात् यत्नमुत्पादयति, ज्ञानमुत्पादयतीति सम्भवात् आख्यातः तत्र अर्थसाधुरपि । एवं रीत्या अर्थसाधुत्वसम्भवे केवलं शब्दसाधुत्वाश्रयणमयुक्तम् ।

ननु त्वन्मतेऽपि अर्थात् उत्पादनैवाख्यातार्थ इति मतेपि क्वचित्स्थलविशेषे शब्दसाधुत्वमात्रमङ्गीकृतमिति नेदमापादनं युज्यते । तथाहि – 'घटमुत्पाद-

यति' इत्यत्र विवरणं घटोत्पत्तिम् करोति - इति । अत्र उत्पादना आख्यातार्थः । तस्याश्च धात्वर्थोत्पादनायां विषयतासम्बन्धेनान्वयः वक्तव्यः । एवञ्च उत्पादनानिष्ठविषयतानिरूपितविषयिताश्रया उत्पादना इति बोधः स्यात् । न च तद्युक्तम् । अतस्तत्र आख्यातः शब्दसाधुः एव न तु अर्थसाधुः इत्यत्रेदमुत्तरं भवतीति रत्नकोशकारमतं समर्थितं वेदितव्यम्। यद्यपि रत्नकोशकारमते घटमुत्पादयति इत्यादिषु उत्पादनार्थकधातूत्तराख्यातस्य शब्दसाधुत्वमात्रम् । परं यत्नाद्यर्थकत्ववादिमते बहुषु स्थलेषु जानाति, इच्छति, यतते, निद्राति इत्यादिषु शब्दसाधुत्वमात्रमङ्गीकर्तव्यमिति दोषबाहुल्यम् ।

आक्षेपः – नन्वेवं "पचति" इत्यादौ लडादिस्थले यत्ने वर्तमानत्वलाभः कथम्? इत्युक्ते एवम् – "पचति" इत्यादौ वर्तमानयत्नलाभस्तु धात्वर्थेन आक्षेपप्रमाणबलात् । तदित्थम् । धात्वर्था या उत्पादना तस्यां वर्तमानत्वस्यान्वयं स्वीकृत्य तादृशेन वर्तमानोत्पत्त्यन्वितधात्वर्थेन आक्षेपात् तादृश एव वर्तमानत्वान्वितः यत्नः बोध्यते । एवं कथनेन अन्यः आक्षेपोपि निरस्तः । शाब्दस्य शाब्देनैवान्वयः इति नियमानुरोधेन आक्षिप्ते यत्ने कथं शाब्दस्य वर्तमानत्वस्यान्वयः इत्याशङ्कायामिदमुत्तरम् – अत्र शाब्दस्य वर्तमानत्वस्य न यत्ने भानम् । अथापि आक्षेपात् न केवलं यत्नः आक्षिप्यते, किन्तु वर्तमानत्वविशिष्टः यत्नः । इति रत्नकोशकारमतम् ।

## तर्कताण्डवे रत्नकोशकारमतभङ्गः

यद्यपि एतन्मतं 'यत्तु रत्नकोशकृता उक्तम्' इत्यादिना मणिग्रन्थे एवानूद्य दूषितम् । तथापि तत्रोक्तं गौरवादिदोषमप्रियमाणः तर्कताण्डवकारः स्वयं निष्कृष्य, तदुक्तमनूद्य, प्रकारान्तरेण शिष्यव्युत्पादनार्थं पुनरिहनिरस्यत इति नात्र पुनरुक्तता गतार्थता वा शङ्क्या ।

आख्यातार्थत्ववादिमते "चैत्रः पचति" इत्यादौ चैत्रः पाकमुत्पादयतीति न बोधः । अपि तु चैत्रोत्पत्तिं प्रति उत्पादकः इत्येव बोधः । तथाहि – आख्यातार्थः उत्पत्तिः । उत्पत्तेश्च चैत्रे जनकतासम्बन्धेनान्वयः इति हेतोः नायं बोधः निरूपयितुं शक्यः, तदित्थम् – चैत्रः पाकमुत्पादयतीति विवरणम् । एवञ्च उत्पत्तिनिष्ठजनकतानिरूपितजन्यताश्रयः चैत्रः इति बोधः । अत्र च जनकत्वम् उत्पत्तिकारणत्वरूपम् । एवञ्च उत्पत्तिनिष्ठउत्पत्तिकारणतानिरूपितजन्यताश्रयश्चैत्रः इति बोधः स्यात् । न तु पूर्वोक्तः बोधः । इति विवरणवाक्येन तादृशो बोधः विवक्षितः न सिद्ध्यति इति । अथ च पाकमुत्पादयतीति त्वदुक्तविवरणविरोधोऽपि । अर्थात् पाकोत्पत्तिमुत्पादयति इत्येव विवरणापत्तेरिति भावः । इत्याद्यपक्षे (आख्यातस्य उत्पत्त्यर्थकत्वे) दोषः ।

यद्यपि अत्र "चैत्रः पचति" इत्यनेन पाकोत्पत्तेरुत्पत्तेः चैत्रः कारणमिति वक्तुं शक्यः, उत्पत्त्युत्पत्तेः उत्पत्तिरूपत्वात्, न तदतिरिक्तता । एवञ्च बोधः न बाधितः । परं तैर्दत्तविवरणानुरोधेन एतस्माद् वाक्याद् तादृशो बोधः नैव लभ्यत इति दोषोद्भावनम् इति बोध्यम् ।

अथ च 'उत्पत्तिराख्यातार्थः; उत्पादनैव आख्यातार्थः' इति पक्षद्वयेपि दोषः प्रदर्श्यते । यत्र ज्ञानोत्पादकत्वं तत्र सर्वत्र जानातीति प्रयोगः स्यात् । ज्ञानोत्पादकत्वं च चेतनाचेतनसाधारणम् । यथा आत्मा ज्ञानं प्रति कारणम् तथा अचेतनाः इन्द्रियलिङ्गशब्दाः अपि । अतः चक्षुः घटं जानाति, वाक्यं घटं जानाति, लिङ्गं वह्निं जानाति इत्यादिप्रयोगाः स्युः । यतः चक्षुर्घटं जानातीति प्रयोगस्यायमर्थः – चक्षुः घटज्ञानमुत्पादयतीति । आख्यातार्थस्य उत्पादनारूपस्य जनकतया अथवा आश्रयतया इन्द्रियादौ अन्वयसम्भवात् । अर्थात् प्रथमपक्षे उत्पादनानिष्ठजनकतानिरूपितजन्यताश्रयम् इन्द्रियमिति ।

द्वितीये च उत्पत्तिकारणत्वनिष्ठआधेयतानिरूपिताधिकरणताश्रयम् इन्द्रिय-मिति बोधस्याबाधितत्वात् ।

एवञ्च-उत्पादना च उत्पादकनिष्ठधर्मविशेषरूपा सा च कर्त्रादिसाधारण इति करणानामपि उत्पादकत्वेन उत्पादनाश्रयत्वसम्भवात् - इति भावः ।

अपि च उत्पादकत्वेनैव प्रातिपदिकार्थस्यान्वये दोषान्तरम् – 'चैत्रो घटं जानाति' इत्यस्माद्बोधे घटज्ञानवान् न वा चैत्रः? इति संशयस्य वारणं न सम्भवति । अचेतनस्यापि ज्ञानरहितस्य घटज्ञानोत्पा- दकत्वेन अचेतने यथा घटज्ञानं नास्ति तथा चैत्रेऽपि ज्ञानोत्पादकत्वसादृश्येन घटवान् न वेति संश-यानिवृत्तेः ।

यद्यपि ज्ञानविषयकव्यापारः नास्तीति रत्नकोशकारमते(तन्मतनिरूप-णावसरे)भिहितः । परमन्यत्र न्यायामृते ज्ञानविषयकव्यापारः अपि सम-र्थितः । यथा सूक्ष्मारुन्धतीनक्षत्रदर्शनाय प्रयत्नः कार्यः इति रीत्या । अपि च सुधायां 'भक्त्यर्थं हि भगवन्महिमोक्तिः' इत्यत्रापि । अथवा शाब्दबोधस्थले शब्दश्रवणानन्तरमर्थज्ञानार्थं प्रयत्नः विधीयते इति । अत्र दर्शनं ज्ञान-विशेषः । एवं भक्तिश्च ज्ञानसहितः स्नेहविशेषः । एवं सत्यपि प्रकारान्तरेणात्र दोषपरिहारः प्रदर्शितः इति ज्ञेयः ।

एवम् अस्मन्मते च 'इत्युक्तेर्बन्धमिथ्यात्वं नैवमुक्तिरपेक्षते' इत्यादिस्थलेषु अनुपपत्तिः आपाततः प्रतीयते । मुक्तिः उक्तिश्च बन्धमिथ्यात्वं नैव अपेक्षते इति अपेक्षायाः जडे असम्भवेन मुक्तौ तदनपेक्षत्ववर्णनम् अनुचितमिति अत्रा-ख्यातस्य न मुख्यता । परं परिहारः एवम् – यद्यपि अपेक्षायाः पुरुषधर्मत्वात् कथमेतत्? इत्थम् । प्रतीयमानोऽर्थः अर्थान्तरविषयां पुरुषस्य अपेक्षामुपजन-यन् सापेक्षः इति उपचर्यते, जानाति मन्थाचलः इत्यादिवत् । यद्वा प्रमितस्य

अनुपपद्यमानस्यैवार्थस्य उपपादकाक्षेपकशक्तिः अपेक्षा अत्र उच्यते इति मुख्यतः अपेक्षाश्रयत्वं घटते –इति बोध्यम् ।

## तर्कताण्डवे प्राभाकरमतानुवादः

प्राभाकरमते "पचति" इत्यादिस्थलेषु अयं धात्वर्थः – तण्डुलविक्लित्यादिरूपफलानुकूलः अधःसन्तपनादिरूपव्यापारः इति । आख्यातार्थश्च सङ्ख्यामात्रम्, न तु व्यापारः न वा यत्नः । अतः आख्यातस्य व्यापारार्थकत्ववादिमते यत्नार्थकत्ववादिमते ये दोषाः तेऽस्मिन् पक्षे न । एवं 'गच्छति' इत्यादिस्थलेषु उत्तरदेशसंयोगादिरूपफलानुकूलः चलनादिरूपव्यापारः गम्लृधात्वर्थः । 'सङ्ख्यैव आख्यातार्थः' इत्यनेन व्यापारादिमात्रं व्यावर्त्यं भवति, न तु वर्तमानत्वाद्यपि । यतस्तैः प्राभाकरैः लडादीनां वर्तमानत्वाद्यर्थकत्वं स्वीकृतम् । अपि च अग्रे लडाद्युक्तं वर्तमानत्वम् इति ग्रन्थविरोधः स्यात् । एवञ्च 'चैत्रः पचति', 'रथो गच्छति' इति चेतनाचेतनसाधारण्येन प्रयोगे, चैत्ररथयोः पाकगमनरूपधात्वर्थान्वय एव प्रतीयते, न तु कृत्याश्रयत्वं, नापि तदनुकूलव्यापाराश्रयत्वम् इति सर्वत्रापि धात्वर्थाख्यातार्थौ मुख्यौ । अत्र धात्वर्थग्रहणं दृष्टान्तत्वेन ज्ञेयम् । यथा तस्य सर्वत्र मुख्यत्वं तथा आख्यातार्थस्यापीति बोधनाय । अत्र विशेषः – धात्वर्थस्य सम्बन्धः चैत्रे एवं प्रत्ययार्थसङ्ख्यायापि सम्बन्धश्चैत्रे(कर्तरि) एतन्मते भासते । 'चैत्रपाकः' 'रथगमनम्' इतिरीत्या। एवञ्च आख्यातस्य सङ्ख्यावाचित्वेन कारणेन चेतनाचेतनस्थले रथादौ एकत्वादिसङ्ख्यान्वयस्य अबाधितत्वेन तन्मात्रेऽर्थे स्वीकृते सर्वत्राख्यातस्य मुख्यत्वं सम्पादयितुं शक्यते ।

न च कथं तर्हि "पचति" इत्यादिषु यत्नबोधः इति उक्ते उत्तरमिदम् – धात्वर्थेनाक्षेपाद् यत्नःलभ्यते इति । यथा "पचति" इत्यत्र धात्वर्थः व्यापार-

रूपः चेतननिष्ठः अतः यो यः व्यापारः चेतननिष्ठः स सर्वोऽपि कृतिं विनानुपपन्नः कृतिमाक्षिपति । एवं पूर्वमतापेक्षया 'जानाति, इच्छति, यतते, निद्राति' इत्यादिषु सर्वत्र ज्ञानानुकूलयत्नाभावेऽपि अथवा ज्ञानानुकूलव्यापाराभावेऽपि धात्वर्थसम्बन्धिनि देवदत्तादौ सङ्ख्यायाः अन्वयः शक्यत इति एते प्रयोगाः सूपपन्नाः इति एतेषामिदमानुकूल्यम् ।

## तर्कताण्डवे प्राभाकरमतखण्डनम्

यद्यपि प्राभाकरमतमपि आख्यातवादे मणौ "एतेन" इत्यादिनानूद्य "इति गुरुमतम् अपास्तम्" इत्यादिना दूषितमपि, तदुक्तदूषणाय अरोचयमानः ताण्डवकारः स्वयमनूद्य प्रकारान्तरेण दूषयतीति न गतार्थता । तथाहि –"चैत्रः पचति" इत्यादिषु स्थलेषु चैत्रादेः धात्वर्थान्वयः प्राभाकरैरुक्तः । न च तद्युक्तम् । यतः चैत्रादेः धात्वर्थेन सह नाश्रयतासम्बन्धः भवितुमर्हति । अधःसन्तपनादेः स्थाल्याश्रितत्वात् अथवा तण्डुलाश्रितत्वात्. न तु चैत्रे अधःसन्तपनम् । अन्यथा "चैत्रं पचतीति प्रयोगः स्यात् । नापि धात्वर्थेन सह चैत्रादेः जनकतासम्बन्धः । यद्यपि धात्वर्थनिष्ठजन्यतानिरूपितजनकता चैत्रेस्तीति तु सत्यम् । न तु पूर्वोक्त-अधःसन्तपनादिवत् नास्ति इति । तथापि तादृशजनकत्वं काष्ठादावपि सत्वेन काष्ठानि पचन्तीत्यादिप्रयोगाः मुख्याः स्युः । गौणत्वं भज्येत । एवं पाकजनकेषु कालादृष्टस्थाल्यादिषु प्रयोगातिप्रसङ्गः । नापि धात्वर्थेन सह चैत्रादेः स्वजनककृत्याश्रयत्वं सम्बन्धः । यतो हि एवं सति धात्वर्थेन चैत्रादेः अन्वयस्तु उपपादितः परम्परया । अत एव "चैत्रः पचति" इत्यत्र कृतेर्बोधः संसर्गप्रविष्टत्वेन इत्यपि निरूपितः । परं रथो गच्छतीत्यादौ गमनेन सह रथस्य न धात्वर्थजनककृत्याश्रयत्वं सम्बन्धः भवितुमर्हति । कृतेः रथे अभावात् । एवञ्च आख्यातस्य सङ्ख्यार्थकत्वमात्र-

स्वीकारेण यः सर्वत्र मुख्यव्यवहारः प्रतिपिपादयिषितः स न सिद्ध्येत् इति धात्वर्थेन सह कर्तुः अन्वय एव नोपपद्यते इति निरूपितम् ।

एवं धात्वर्थान्वयं चैत्रादेः निरस्य सङ्ख्यामात्रवाचित्वमाख्यातस्य इति यदुक्तं तदपि नेति प्रतिपाद्यते । तथाहि – यदि व्यापारः न आख्यातार्थः अपि तु सङ्ख्या तदा लडाद्युक्तं वर्तमानत्वं केनान्वियात्? अत्र लडादिपदेन शतृशानचौ गृह्येते । उपलक्षणतया लृडादिकं च । न तावद् वर्तमानस्य धात्वर्थे चैत्रे अन्वयः । यतः धात्वर्थः अधःसन्तपनादिरूपः । स च एतावता नागतः। तत्काले अर्थाद् वर्तमानकाले अधःसन्तपनानुकूलशरीरस्पन्दादिरूपव्यापारसत्वे "पचति" इति प्रयोगः यद्यपीष्यते परं पक्ष्यतीत्येव प्रयोगः स्यात् । यतः धात्वर्थे अधःसन्तपने वर्तमानत्वान्वयात्, तस्य चेदानीमभावात् । अपि च एकप्रत्ययोपात्ते परस्परं पदार्थयोरन्वयः इति मत्वा सङ्ख्ययापि वर्तमानत्वस्य नान्वयः । तथा सति अयमपाक्षीत् इत्यादौ "पचति" इतिप्रयोगः स्यात् । सङ्ख्यायाः एकत्वरूपायाः चैत्रे सदा सिद्धत्वात् । अतः सङ्ख्ययापि वर्तमानत्वस्य नान्वयः । तस्मात् पचतीत्यादिप्रयोगेन व्यापार एव वर्तमानत्वादेः प्रतीत्या तदनुरोधेन धात्वर्थानुकूलव्यापार एव आख्यातार्थः अर्थात् फलानुकूलः अधःसन्तपनादिरूप एव पच्यादिधात्वर्थः । तदनुकूलो व्यापारस्तु शरीरस्पन्दादिरूप एव आख्यातार्थः तद्गतमेव वर्तमानत्वं च आख्यातेनोच्यते इति वक्तव्यमिति युक्तम् ।

यत् तु मणौ अथ पाकानुकूलेककृतिकाले "पचति" इतिवत् इत्यादिना कृतेः आख्यातार्थत्वे प्रतिव्यापारं कृतेरानन्त्येन एकस्याः कृतेः सत्वकाले अपरस्याभावेन अपचत् इत्यादि प्रतीतिप्रसङ्गरूपं बाधकमाशङ्कितम् तद्व्यापारपक्षेपि सममिति भावेन एवमाशङ्का तर्कताण्डवे । तथाहि – यदि वर्तमानत्वस्य व्यापारेणान्वयः । यथा एकैकस्य व्यापारस्य वर्तमानत्वेन "पचति" इति प्रयु-

ज्यते तथैव एकैकस्य व्यापारस्य अर्थात् स्थालीस्थापनस्य, अधःसन्तपनस्य, तण्डुलप्रक्षाळनस्य, स्थाल्यां तण्डुलप्रक्षेपणस्य, दर्व्या परिलोडनस्य च क्रमभावितया एकदैव सर्वमेळनासम्भवेन एकैकस्य अभावे अनागतत्वेन अतीतत्वेन च "पचति" इति प्रयोगकाले एव पक्ष्यति, अपाक्षीदिति प्रयोगापत्तिः । अत्र सर्वसमुदायस्य एकदा सर्वमेळनासम्भवेन वर्तमानत्वेन "पचति" इति प्रयोगस्यायोगात् एकैकस्येत्युक्तमिति बोध्यम् ।

परिहारः – यावतां व्यापाराणां मध्ये एकैकस्य विद्यमानत्वेन तदानीं च वर्तमानत्वेन "पचति" इति व्यवहारः तावतां सर्वेषां व्यापाराणाम् अर्थात् साकल्येन स्थालीस्थापनादीनां प्रागभावे पक्ष्यतीति प्रयोगः । यदि सर्वेषां पूर्वोक्तानां ध्वंसः तदानीम् अपाक्षीदिति प्रयोगः । अथ च यस्य कस्यचिद् पूर्वोक्तस्य व्यापारस्य स्थितिः तदा "पचति" इति प्रयोगः क्रियते । कुतः एषा कल्पना? इत्यत्रेदमुत्तरम् – व्यवहारानुरोधेन हि सर्वत्र निमित्तकल्पनम् । न तु निमित्तं किञ्चित्प्रकल्प्य व्यवहारः अनुरुद्ध्यते ।

अर्थात् तण्डुलादि विक्लित्तिफलजनकअधःसन्तपनानुकूलः यः अव्यवहितव्यापारः कर्तृनिष्ठः तस्मिन् यत्किञ्चित्सत्वेपि "पचति" इत्येव लोके प्रयुज्यते । न तु पक्ष्यति, अपाक्षीदिति वा । अपि च श्रमशान्तिद्वारा शयनमपि पाकानुकूल एव व्यापारः । तथापि तस्य सत्वे न "पचति" इति प्रयोगः । अत एव अव्यवहितरूपत्वं व्यापारे विवक्षणीयम् ।

अपि च अपरो दोषः आख्यातस्य सङ्ख्यामात्रवाचित्वे 'देवदत्तः गच्छति' अथवा 'एको देवदत्तः गच्छति' इत्यादि स्थलेषु आख्यातमन्तरापि एकत्वसङ्ख्याप्रतीतेः सत्वात् तत्र आख्यातपदवैयर्थ्यापत्तिः ।

* * * * *

## तर्कताण्डवे सङ्ख्यायाः वाच्यगामित्वनियमेन कर्तृकर्मणोरपि आख्यातार्थत्वसमर्थनम्

यत्तु मणौ 'स्यादेतत् चैत्रस्तण्डुलं पचति' इत्यादिना 'इति वैय्याकरणाः' इत्यन्तेन कर्तृकर्मणोरपि लकारार्थत्वमाशङ्क्य 'तन्न' इत्यादिना दूषितम् । तदप्ययुक्तमिति भावेन आख्यातार्थनिरूपणप्रसङ्गात् आख्यातार्थत्वं कर्त्रादेः साध्यतेऽस्मिन् प्रकरणे । तथाहि – यद्यपि 'लः कर्मणि च भावेचाकर्मकेभ्यः' इति सूत्रेण लकाराः सकर्मकेभ्यो कर्तरिकर्मणि च भवन्ति, अकर्मकेभ्यः भावे कर्तरि च इति लकाराः भावे कर्मणि कर्तरीति त्रिष्वर्थेषु विहिताः । अत्र सूत्रे चकारात् कर्तरिकृत् इत्यस्मात् कर्तरीति लभ्यते । परमत्र प्रकरणे भावार्थे वादिनां विप्रतिपत्त्यभावेन कर्तृकर्मणोः आख्यातार्थत्वम् इति विचारमात्रं प्रस्तुतमिति बोध्यम् । एवञ्च एतावता लकाराणां वर्तमानत्वं, सङ्ख्या, यत्नः, उत्पादना इत्यादयः नैके अर्थाः अभिहिताः । केचिदङ्गीकृताः केचिन्निराकृताश्च । इतःपरं कर्तृकर्मणी अपि लकारवाच्ये इति प्रतिपाद्यते । यथा चैत्रः तण्डुलान् पचति इत्यत्र आख्यातवाच्यः कर्ता । चैत्रेण पच्यन्ते तण्डुलाः - इत्यत्र आख्यातवाच्यं कर्म – इति बोध्यम् । अयमपरः विषयः – अत्र सर्वत्र साङ्कर्येण लकारतिङ्प्रत्ययानामाख्यातव्यवहारः क्रियते । तच्च युक्तमेव इति ज्ञेयम्, स्थान्यादेशभावसद्भावात् ।

एवञ्च लकारवाच्यत्वं कर्तृकर्मणोरिति विषये किंप्रमाणम्? इति प्रश्ने उत्तरम् - अर्थापत्तिरिति । आख्यातोक्तसङ्ख्यान्वयानुपपत्तिरिति यावत् । तथाहि – आख्यातोक्तसङ्ख्यायाः नियमेन कर्तृकर्मणोरेव अन्वयदर्शनात्, तस्य च आख्यातार्थत्वं विनानुपपत्तेः, कर्तृकर्मणोरपि आख्यातार्थत्वं सिद्ध्यति । अत एव चैत्रः तण्डुलान् पचति इत्यादिषु तण्डुलकर्मकपाकानुकूलव्यापाराश्रयः यः एकत्वविशिष्टः तदभिन्नः यः चैत्रः इति बोधः वर्ण्यते । अत्र च

द्वैतमते 'व्यवहारे न्यायनयः' इत्यवलम्ब्य विषयनिरूपणात् बोधः प्रथमान्तार्थ-मुख्यविशेष्यकः एव वर्णनीयः इति अभियुक्ताः केचन कथयन्ति । परमत्र प्र-करणे नैय्यायिकं पूर्वपक्षित्वेन संस्थाप्य वैय्याकरणमतं समर्थ्यते । क्वचिदंशे नैय्यायिकमतसम्मतिसत्वेऽपि क्वचिन्न । मूलयुक्तिस्तु प्रथमान्तार्थमुख्य-विशेष्यकबोधवर्णने न काप्युक्तिः प्रतीयते इति भाति ।

कुतः आख्यातार्थत्वं कर्तृकर्मणोरित्यत्र अनुमानप्रमाणं प्रदर्श्यते – कर्तृ-कर्मणी, आख्यातवाच्ये, नियमेन आख्यातोक्तसङ्ख्यान्वयवत्वात्, सम्मतवत् - इति । यः यदुक्तसङ्ख्यान्वयवान् नियमेन सः तद्वाच्यः । अन्यथा आख्या-तावाच्येऽपि कर्तृकर्मरूपे आख्यातवाच्यसङ्ख्यायाः अन्वये अवाच्येष्वनेकेषु सङ्ख्यायाः आख्यातोक्तायाः अन्वयः स्यात् । एकत्रैव इति न नियमः स्यात् । न च कर्तृकर्मणोः चैत्रतण्डुलयोः आख्यातोक्तसङ्ख्यान्वयनियम एव न सिद्धः इति वाच्यम् । अन्यथा सङ्ख्याविनिमयः स्यात् । अर्थात् आख्यातोक्तस-ङ्ख्यान्वयस्य अभावप्रसङ्गः । यतः तण्डुलान् "पचति" इत्यत्र तण्डुलान् पच-न्तीत्यपि स्यात् । "पच्यन्ते तण्डुलाः" इत्यत्र च "चैत्रेण पच्यते" इति च स्यात् । अतः कुत्रापि आख्यातोक्तसङ्ख्यायाः अन्वयो न इति आपद्येत, प्र-योगनियमासम्भवात् अथवा सर्वत्रापि सङ्ख्यान्वयः आपद्येत ।

इदानीं हेतोः अप्रयोजकत्वं शङ्कते । तथाहि –यद्यस्ति आख्यातस्य सङ्ख्यावाचकत्वं तदा तस्य नियमेन स्ववाच्यकर्तृकर्मणोरेवान्वयसम्भवात् । अन्यथातिप्रसङ्गात्, आख्यातः कर्तृकर्मवाचक इति अभ्युपगन्तव्यः स्यात् । न चाख्यातस्य सङ्ख्यावाचित्वं नास्तीति वक्तुं शक्यम् इति विषयं पक्षधराद्युक्त-प्रश्नोत्तराभ्यामेव निर्धारयति । तदित्थम् – आख्यातस्य विनैव प्रथमान्त-कर्तृवाचकपदं प्रथमान्तकर्मवाचकपदं प्रयोगो नास्ति । यत्र यत्राख्यातपदं प्रयुज्यते तत्र सर्वत्र प्रथमान्तकर्तृपदेन प्रथमान्तकर्मपदेन वा भाव्यम्, यथा

'चैत्रः पचति' 'तण्डुलः पच्यते' इत्यादिषु । अत्र सङ्ख्याप्रतीतेः सत्त्वेन किमपि तद्वाचकम् अपेक्षितम् । तच्चाख्यातमेव भवेदिति न नियमः । तर्हि कथं सङ्ख्याप्रतीतिः इत्युक्ते चैत्रः इत्यादिपदेषु विद्यमाना या सुप्विभक्तिः, तयैव सङ्ख्याप्रतीतेः उपपादयितुं शक्यत्वात् । अपि च आख्यातेनापि सङ्ख्याभिधाने पौनरुक्त्यं च स्यात् । न च यत्र प्रथमान्तपदं नास्ति, तत्र केवलमाख्यातपदमस्तीति तत्र सङ्ख्याप्रतीत्यर्थमाख्यातस्य सङ्ख्यापदवाचकत्वमपेक्षितमेव इति वाच्यम् । तादृशसुबन्तप्रयोगं विना आख्यातप्रयोग एव नाङ्गीक्रियते । सर्वत्र यथा 'चैत्रेण पच्यन्ते तण्डुलाः' इत्येव प्रथमान्तपदसमभिव्याहारेण आख्यातपदं प्रयुज्यते ।

न च विनिगमनाविरहात् अर्थात् पौनरुक्त्यभयात् अन्यतरस्य सङ्ख्यावाचित्वत्यागे अवश्यम्भाविनि आख्यातस्यैव तत्कुतः? इति आख्यातपदमेव सङ्ख्यावाचकं भवतु न तु सुप्-विभक्तिरूपमिति वाच्यम् । सर्वत्राख्यातपदाभावात् यथा 'चैत्रो दण्डी' इत्यादौ आख्याताभावेऽपि सङ्ख्याप्रतीतेः सुप्विभक्त्यैव वक्तव्यत्वेन विनिगमनाविरहस्तदवस्थ एव ।

समाधानम् – सत्यम् । विनैवाख्यातपदं प्रयोगाः दृश्यन्ते । किन्तु विपरीततया, प्रथमान्तादिपदसमभिव्याहारं विना तु कुत्रापि आख्यातपदं न प्रयुज्यते । 'पिधेहि' इत्यादिषु प्रयुज्यत इति यद्यपि भासते परं तत्र 'द्वारम्' इत्यादि पदाध्याहारः आवश्यक एवेति न तत्रानुपपत्तिः । अपि च पूर्वपक्ष्युदाहृते 'चैत्रो दण्डी' इत्यादौ यत्नेन विनापि अस्तिभवत्योः सर्वत्राध्याहारः इत्याद्यनुशासनानुरोधेन अस्तीत्याद्याख्यातपदमावश्यं प्रयोक्तव्यमेवेति तत्रापि विनिगमनाविरह एव । अपि च वैय्याकरणरीत्या पदसंस्कारपक्षे यत्र केवलं “पचति” इति प्रयुज्यते तत्र सङ्ख्याबोधः आख्यातेनैव भवेदित्यादयः परिहाराः

अत्र सम्भवन्ति । तथापि तादृशस्थलमत्र ग्रन्थकारैः प्रदर्श्यते यत्र सुप्-विभक्तेः सत्वेपि तिङ्विभक्त्यैव सङ्ख्याप्रतीत्युपपादनं कर्तव्यम् । तथाहि –

**चन्द्रे कळङ्कः सुजने दरिद्रता**
**विकासलक्ष्मीः कमलेषु चञ्चला ।**
**मुखाप्रसादः सधनेषु सर्वदा**
**यशो विधातुः कथयन्ति खण्डितम् ॥**

अयं भावः – विधाता अर्थात् ब्रह्मा महान् सृष्टिकर्ता यः अत्यन्तम् उत्कृष्टान् पदार्थान् ससर्ज । यथा चन्द्रादीन् । अथापि तस्य यशः प्रतिहतं भवति । नोत्कृष्टतया गानार्हम् । यतश्चन्द्रः आपाततः पदार्थप्रकाशकत्वादि-बहुसुगुणोपेतः इव भाति; परं तत्र कळङ्करूपः दोषः विधात्रा कृतः। एवं सात्विकजनेषु दारिद्र्यम् । कमलेषु विकासः सूर्यास्तित्वपर्यन्तम् । सूर्यापगमे चञ्चला या विकासरूपा लक्ष्मीः सा निवृत्ता भवति । एषापि विधातृकृता अपि च ये श्रीमन्तः सधनाः पुरुषाः तेषां च मनःखेदप्रदानेन मुखाप्रसन्नता । अतः विधातुः स्रष्टुः यशः खण्डितं प्रतिहतं कथयन्ति । अत्र चन्द्रगतकळङ्कादयः यशोहानिं कथयन्ति – अकुशलोऽयं विधाता चन्द्रादिषु अनर्हमेव कळङ्कादि-कमकरोदित्यादिरूपेण इति बोध्यम् ।

एवञ्च अत्र प्रथमान्तपदानि कळङ्कः, दरिद्रता, विकासलक्ष्मीः, मुखाप्रसादः इति चत्वारि । परमत्र बहुत्वसङ्ख्याप्रतीतिः जायते । सा च न सुप्--विभक्त्या निर्वोढुं शक्या । अत एवात्र कथयन्तीति तिङ्विभक्त्यैव बहुत्वप्रतीतिरुपपादनीया । न च अत्र बहुत्ववाचकसुप्-विभक्तेः अश्रवणेऽपि कळङ्कः, दरिद्रता, विकासलक्ष्मीः, मुखाप्रसादः इत्येते पदार्थाः इति अध्याहृतबहुत्ववाचकसुप्-विभक्तिरस्तीति न अन्यथासिद्धिरिति वाच्यम् ।

उत्तरम् – अत्र एते पदार्थाः इति पदाध्याहारोऽपि कथयन्तीति क्रियापदाधीनमेवेति तत्र तिङ्-विभक्त्या बहुत्वप्रतीतिः आवश्यकीति नाख्यातस्य सङ्ख्यावाचकत्वाभावः उपपादयितुं शक्यः ।

किञ्च अभेदान्वयानुपपत्त्या च कर्त्राद्यर्थत्वं लकारस्य वक्तव्यम् । तथाहि – "चैत्रः पचति" इत्यादिस्थलेषु कर्तुः आख्यातवाच्यत्वे एव तस्य प्रातिपदिकार्थचैत्रेण सह अभेदान्वयः सम्भवति । अन्यथा कर्तृप्रतीत्यभावेन चैत्राभिन्नः कर्ता इति बोधाभावः । यथा चैत्रो दण्डीत्यत्र दण्डीतिपदं दण्डविशिष्टं बोधयति इति कारणतयैव तत्पदार्थेन चैत्रस्याभेदरूपान्वयः । यदि कर्ता आख्यातावाच्यः तदा आख्यातोक्ताकेवलासङ्ख्यैवेति तेनैव सह चैत्रेणान्वयः स्यात् । न च तद्युक्तम् । तथा सति आख्यातस्य सङ्ख्यार्थकत्वकथनमपि व्यर्थम् । इतरानाङ्क्षितत्वात् । तदेवम् – "चैत्रः पचति" इत्यत्र चैत्रे एकत्वसङ्ख्याप्रतीतिरावश्यकी । सा च एकपदोपात्तत्वरूपान्तरङ्गमर्यादया चैत्रः इति पदे एव विद्यमानया सुप्-विभक्त्या एकत्वसङ्ख्या बोध्यत इति तस्यैव चैत्रे आश्रयतया भानम् । एवञ्च आख्यातोक्तसङ्ख्या अनाकाङ्क्षिता इति सङ्ख्यार्थकत्वमाख्यातस्य नाभ्युपेयम् । कुत्राप्यनन्वयेन व्यर्थत्वात् ।

न चेदं सङ्ख्याद्वयं न, अपि तु एकैव सङ्ख्या सुप्-विभक्त्याख्याताभ्यां प्रतीयते । तथा च अन्तरङ्गभूतसुप्-विभक्तिबोध्यसङ्ख्ययैव चैत्रान्वयः न तु तिङ्-विभक्तिबोध्यसङ्ख्यया इति विभागः अयुक्तः इति वाच्यम् । अत्र द्वयोः सङ्ख्यावाचित्वेऽपि एकसङ्ख्यावाचित्वमादायेदं समाधानमयुक्तम् । यतः एकस्याः सुप्-विभक्तिबोध्यायाः सङ्ख्यायाः एकपदोपात्तत्वेन शीघ्रया अभिहितत्वेन मन्थरायाः अर्थात् पृथक्पदोपात्तत्वेन बहिरङ्गत्वेन कर्तृगतसङ्ख्यावाचित्वस्य विलम्बितत्वात् तिङ्-विभक्तेर्वैय्यर्थ्यमिति ।

न च वाक्यश्रवणे तद्घटकपदजन्यपदार्थस्मृतेः समूहालम्बनरूपायाः जायमानत्वेन तस्याश्च एकत्वेन पौर्वापर्यरूपक्रमाभावात् विभक्तिद्वयेनापि एकैव सङ्ख्या एकदैव प्रतीयत इति नाख्यातवैय्यर्थ्यमिति वाच्यम् । पौर्वापर्यस्य आवश्यकत्वात् । तथाहि मीमांसकन्यायः –

**यद्यदाकाङ्क्षितं योग्यं सन्निधानं प्रपद्यते ।**
**तेन तेनान्वितः स्वार्थः पदैरेवाभिधीयते ॥ इति ।**

अयं भावः – पदार्थयोः बोधः प्रथमं सन्निहितयोः, अनन्तरं व्यवहितयोः। यथा घटमानय इत्यत्र घटमिति पदात् प्रथमं घटनिष्ठत्वं कर्मत्वमिति बोधः भवति, अवान्तरवाक्यार्थरूपः । तदनन्तरं तत्रस्थितपदार्थाः परस्परं अन्वी- यन्ते । परमिदमावश्यकं यत् पदार्थयोः परस्परमाकाङ्क्षितत्वं योग्यत्वं सान्निध्यं च । अत्रापि प्रकृते मुख्यं भवति सान्निध्यम् । एवञ्च एकदैव सर्वपदार्थस्मृतेः समूहालम्बनरूपायाः विवक्षां कृत्वा तिङ्-विभक्तिवैय्यर्थ्यवारणं न शक्यते । तथा च "चैत्रः पचति" इत्यादिषु प्रथमं सुप्-विभक्तिचैत्रप्रातिपदिकार्थयोः अन्वयः इति आख्यातस्य वैय्यर्थ्यं तदवस्थमेव ।

अन्यथा अर्थात् अवान्तरवाक्यार्थमनङ्गीकृत्य एकदैव महावाक्यार्थाङ्गीकारे शास्त्रपाठादिकं न स्यात् । यतः एकस्मिन्नेव दिने कृत्स्नशास्त्रपाठायोगेन प्रतिदिनं खण्डशः खण्डशः एव पाठकरणं दृष्टम् । अपि च मीमांसकैः क्रियमाणं शैघ्र्यमन्थरत्वाभ्यां श्रुतिवाक्यादेः बलाबलव्युत्पादनमसङ्गतं स्यात् । यतः तत्र बलाबलव्युत्पादनं सन्निकृष्टत्वविप्रकृष्टत्वाधीनम् । त्वन्मतरीत्या च सन्निकर्षविप्रकर्षाभावेन, अर्थात् एकदैव सर्वेषां सन्निधानात् तत्प्रयुक्तं (सन्निकर्षविप्रकर्षप्रयुक्तम्) बलाबलव्युत्पादनमशक्यम् । तेषां शास्त्रे एवं वर्णितम् – तृतीयेऽध्याये श्रुतिलिङ्गवाक्यप्रकरणस्थानसमाख्यानां समवाये (मिलिते) पारदौर्बल्यं (पर) अर्थविप्रकर्षादित्यधिकरणे –

**प्रत्यक्षे चानुमाने च यथालोके बलाबलम् ।**
**शीघ्रमन्थरगामित्वात् तथैव श्रुतिलिङ्गयोः ॥** - इति वार्तिकम् ।

अत्र श्रुतिलिङ्गयोः शीघ्रमन्थरगामित्वं प्रतिपादितम् । यथा लोके प्रत्यक्षानुमानयोः । अनुमानं च व्याप्त्यादिप्रतीत्यपेक्षमिति मन्थरगामि । प्रत्यक्षं च शीघ्रगामि । तयोर्मध्ये शीघ्रगामित्वेन प्रत्यक्षस्य प्राबल्यम् । तथैव प्रकृते इति अत्र ग्रन्थे वर्णितम् ।

अत्र अन्तिमभूता समाख्या । तया स्थानं निर्णीयते । तेन च प्रकरणम् । तेन वाक्यम् । तेन लिङ्गम् । तेन श्रुतिरिति निरपेक्षस्वभूतश्रुतेः प्राबल्यं सर्वापेक्षया । वाक्यं च लिङ्गद्वारा श्रुतिमुपस्थाप्य शेषशेषिभावे प्रमाणम् । अत्र च श्रुतिः प्रकृतिप्रत्ययसमभिव्याहाररूपा बोध्या । वाक्यं च पदान्तरसमभिव्याहाररूपं बोध्यम् ।

प्रकृताभिप्रायेण श्रुतिलिङ्गयोरिति अनपेक्षितमिति श्रुतिवाक्ययोरिति स्वीकृत्य एवं व्याख्यायते – "चैत्रः पचति" इत्यत्र पदश्रुत्यपेक्षया आख्यातोक्तसङ्ख्यान्वयस्य वाक्यगम्यत्वेन पदश्रुतेरेव शीघ्रगामितया प्राबल्यम् । विवरणम् – चैत्रप्रातिपदिकगता या सुप्-विभक्तिः, तदुक्ता या एकत्वसङ्ख्या, तदन्वयस्य प्रकृतिप्रत्ययसमभिव्याहाररूपा या पदश्रुतिः तद्गम्यत्वेन आख्यातोक्तसङ्ख्यान्वयस्य पदान्तरसमभिव्याहाररूप(पचति)वाक्यगम्यत्वादिति बोध्यम् ।

न च "चैत्रः पचति" इतिप्रयोगे सुप्-विभक्त्यैव प्रथमं सङ्ख्याबोधनमिति तत्राख्यातपदवैय्यर्थ्यं स्यान्नाम । परं पचति चैत्रः इति यदा प्रयुज्यते तदा आख्यातोपस्थापितसङ्ख्यैव प्रथमं बुद्ध्यत इति तत्र नाख्यातस्य निरर्थकत्वमिति वाच्यम् । एवमपि "चैत्रः पचति" इत्यत्र आख्यातसङ्ख्याननन्वयस्य समाधानं नाभिहितमिति दोषः ।

कथं तर्हि त्वन्मतेऽपि सुप्-तिङ्-रूपोभयवाच्यसङ्ख्यायाः एकत्वेन अन्यतरस्य वैय्यर्थ्यमित्युक्ते एवम् – कर्त्रादिरपि आख्यातार्थः इति मन्मते तु नायं दोषः । सुप्-विभक्त्या पूर्वं सङ्ख्याबोधः इति पक्षे अर्थात् चैत्रः पचति इति स्थले एवमाख्यातेन पूर्वं सङ्ख्याबोधः अर्थात् पचति चैत्रः इति पक्षे च चैत्रपाककर्त्रोः अभेदान्वयः अबाधितः । अर्थात् आख्यातेन सङ्ख्याविशिष्टकर्तृसामान्ये बोधिते सति चैत्रादिपदेन कर्तृविशेषबोधेन सामान्यविशेषयोः समभिव्याहारेण अभेदावगतौ एकैव सङ्ख्या पर्यवस्यति कर्ता चैत्रः इत्यादाविव इति बोध्यम् (कर्ता इति पदेन सामान्यरूपेण कर्ता बोधितः । तद्विशेषश्च चैत्रपदबोधितः । अनन्तरमुभयोरभेदेन बोधः)। इत्थं च आख्यातपदेन कर्तापि अभिधीयते । अत एव एकपदोपात्तत्वेन तत्र सङ्ख्यान्वयः युक्तः । अन्यथातिप्रसङ्गादिति न सङ्ख्यावाचित्वाभावः आख्यातस्य शङ्क्यः। अतः कर्ता लकारवाच्यः इत्यभ्युपगन्तव्यः।

इतः परं ग्रन्थे यत्तु मणौ वस्तुतः "पचति" इत्यत्र यत्नवतः शक्यत्वे धात्वर्थस्य विषयत्वेन कृतौ अन्वयः न स्यादित्यादिनोक्तं बाधकमाशङ्क्य निराक्रियते । तथाहि – कर्तुः आख्यातवाच्यत्वे कर्तृत्वमेव प्रवृत्तिनिमित्तम् अर्थात् शक्यतावच्छेदकं वाच्यम् । कर्तृत्वं च मन्मते कृतिमत्वं त्वन्मते च व्यापारवत्वम् । इति पूर्वपक्षिणा विवृत्य एवमाक्षेपः उपस्थाप्यते । उभयथापि कृतेः व्यापारस्य च धात्वर्थे पाके स्वनिष्ठविषयितानिरूपितविषयतासम्बन्धेन अन्वयः वाच्यः । परं न युज्यते । अथवा पाकनिष्ठविषयितानिरूपितविषयतासम्बन्धेन कृतौ व्यापारे वा अन्वयः वाच्यः । एषोपि न युज्यते । प्रवृत्तिनिमित्तभूतयोः अर्थात् शक्यतावच्छेदकयोः कृतिव्यापारयोः पदार्थैकदेशत्वेन (कृतिमतः व्यापारवतः आख्यातार्थत्वात्) अन्वयप्रतियोगियोग्यताविरहात् । तदित्थम् – 'पदार्थः पदार्थेनान्वेति, न तु तदैकदेशेन' इति नियमः । नियमा-

नङ्गीकारे च 'राजपुरुषमानय' इत्यादौ आनयनरूपपदार्थस्य राजपुरुषरूपप-दार्थस्य एकदेशे राज्ञि अन्वयसम्भवेन राजपुरुषमानय इत्यस्मात् राजानम् आनय इति बोधः स्यात् । प्रकृते च "पचति" इत्यत्र पदार्थस्य = धात्वर्थस्य पाकस्य आख्यातपदार्थे = कृतिमद्रूपे व्यापाराश्रयभूते यः एकदेशः कृतिरूपः व्यापाररूपश्च तत्र विषयितासम्बन्धेन अन्वयः न युक्तः इति ।

परिहारः – त्वयापि पदार्थैकदेशत्वेपि कृतेः बहुषुस्थलेषु धात्वर्थेन अन्व-यस्य स्वीकारात् मयापि तथा वक्तुं शक्यत्वात् इति। तथाहि – पक्ता, पाचकः, पाककर्ता इत्यादिस्थलेषु प्रत्ययाः ण्वुल्-तृचादयः कर्तृबोधकाः अभ्युपगन्तव्याः । ण्वुल्-तृचौ इति सूत्रेण कर्तरि तृच्-प्रत्ययस्य ण्वुल्-प्रत्य-यस्य च विधानात् । उदाहरणम्– पाचकः इत्यत्र बोधः पाकविषयककृतिमान् इति। अत्र धात्वर्थस्य पाकस्य स्वनिष्ठविषयितानिरूपितविषयतासम्बन्धेन कृतौ अन्वयः स्वीकृतः इति तद्वत् "पचति" इत्यत्रापि आख्यातार्थैकदेशे कृतिरूपे व्यापाररूपे वा सम्बन्धविशेषेणान्वयस्वीकारेण निर्वाहः सम्भवति ।

न च पाचकः इत्यादिस्थलेष्वपि कृतिरेवाख्यातार्थः इति वाच्यम् । न च पुनःशङ्क्यं कृतेराख्यातार्थत्वे पाककृतिमान् इति बोधः कथमिति? अन्यथा-सिद्धत्वात् । आकाङ्क्षामर्यादया कृत्याश्रयश्चैत्रः इति बोधः सम्भवात् । अपि च व्युत्पत्तिबलात्, प्रतीतिबलात्, व्यवहारबलाच्च कर्तर्येव पाकक्रियासत्वप्रती-तेः सत्वेन तद्विरोधः दुष्परिहरः।

पाककर्ता इत्यादौ सर्वथापि अपरिहाराच्च । यदि च पाचकः इत्यादेः पाकविषयककृतिमान् इति नार्थः । किन्तु कृतिमान् पाकस्येति पाकसम्बन्धि-कृतिमान् इति स्वीकारे न पूर्वोक्तनियमविरोधः इति शङ्क्यते । तर्हि "पचति" इत्यस्यापि सम्बन्धसामान्यमादाय स एवार्थोस्तु इति नात्रापि पूर्वोक्तनियम-विरोधः इत्युत्तरम् ।

अथापि "पचति" इत्यादौ धात्वर्थपाकविषयकत्वस्य आख्यातार्थे व्यापारे अनुभवसिद्धत्वात् कथं सम्बन्धमात्राङ्गीकारः? इत्यतः तथैव समाधानमुच्यते । तथाहि – द्वैतमते व्यापारविशिष्टे एकैव शक्तिरिति नाभ्युपगम्यते । येन तथा सति तदैकदेशे पाकस्य अन्वयेन पदार्थस्यैव पदार्थेनान्वयः न तु तदैकदेशेन इति नियमविरोधः स्यात् । अपि तु व्यापारे आश्रये च आख्यातस्य शक्तिद्वयम् । तर्हि "चैत्रः पचति" इत्यादौ पाकविषयकव्यापाराश्रयः चैत्रः इति एवं आश्रयमात्रे आख्यातस्य शक्तौ व्यापाराश्रयरूपव्यापारवैशिष्ट्यधीः कथम् इत्यत्रेदमुत्तरम् – अन्विताभिधानवादिनः किल द्वैतिनः । अतः व्यापाराश्रयत्वं तु अन्वयतया भाति । अथापि व्यापारे आश्रये चेति आख्यातस्य शक्तिद्वयकल्पने गौरवम् । न च गौरवम् । यतः एकस्यैव शक्ततावच्छेदकभेदेन शक्तिभेदस्यावश्यकत्वात् । अन्यथा त्वन्मतेऽपि एकस्यैव शक्ततावच्छेदकभेदेन शक्तिभेदस्वीकारः अयुक्तः स्यात् । यथा आख्यातस्य कृतौ वर्तमानत्वे च शक्तिः पराभ्युपगता – तत्र कारणं शक्ततावच्छेदकभेदः । आख्यातत्वं लट्त्वं चेति । एवंश्च आख्यातत्वेन आख्यातेन कृतिरुच्यते । लडादेशाख्यातत्वरूपेण वर्तमानत्वम् । तद्वदेव द्वैतमतेऽपि आख्याते शक्ततावच्छेदकभेदः अङ्गीकृतः । स च आख्यातत्वेन भावकर्मविहिताख्यातभिन्नाख्यातत्वेन च। यथा चैत्रस्तण्डुलं "पचति" इत्यत्र आख्यातप्रत्ययेन आख्यातत्वरूपेण व्यापारः उच्यते । तस्य विषयितया पाकेऽ- न्वयः । एवश्च चैत्रकर्तृकतण्डुलकर्मकपाकानुकूलव्यापारः इति बोधः सम्पन्नः । व्यापाराश्रयत्वं च अन्वयविधया भासते । यथा तार्किकाणां संसर्गस्य संसर्गमर्यादया भानम् तद्वदिति बोध्यम् । अपि च कर्तरिप्रयोगस्थलमिदम् । अतः भावकर्मविहिताख्यातभिन्नाख्यातोऽयमिति तद्गतेनाख्यातत्वेन रूपेण आश्रयमात्रे शक्तिः । एवं कर्माख्यातस्थले चैत्रेण पच्यन्ते तण्डुलाः इत्यत्र आख्यातः

आख्यातत्वेन रूपेण व्यापारं बोधयति । भावकर्तृविहिताख्यातभिन्नाख्यातत्वेन विषयं बोधयतीति ज्ञेयम् ।

एवं भावाख्यातस्थले "चैत्रेण सुप्यते" इत्यादौ आख्यातत्वेन रूपेण व्यापारबोधः कर्तृकर्मविहिताख्यातभिन्नाख्यातत्वेन रूपेण भावबोधः इति ज्ञेयम् । अत्र सर्वत्र शक्तिभेदे शक्ततावच्छेदकभेद एव कारणम् । एतच्च तार्किकैरप्यङ्गीकृतमेवेति पूर्वमुक्तम् । अतः शक्ततावच्छेदकैक्ये सति शक्तिभेदाङ्गीकारे गौरवदोषः सम्भवेत् । परं नानार्थकस्थले नायं दोषः इति विभावनीयम् । तस्मात् व्यापारस्य शक्त्यन्तरेण स्वातन्त्र्येणोपस्थितत्वात् धात्वर्थेन पाकेन सह विषयितया अर्थात् व्यापारस्य स्वनिष्ठविषयतानिरूपितविषयितासम्बन्धेन एवमाश्रयेण आधेयतया अर्थात् आश्रयनिष्ठाश्रयतानिरूपिताधेयतासम्बन्धेन व्यापारस्यान्वयः इति बोध्यम् । अतः नात्र पदार्थैकदेशेन्वयप्रसक्तिः नापि "पचति" इत्यादौ धात्वर्थविषयकत्वस्य आख्यातार्थे व्यापारे अननुभवदोषः ।

यत्तु सङ्ख्यान्वयानुपपत्त्या कर्तुः आख्यातवाच्यत्वमुक्तं तत्र मण्युक्तान्यथासिद्धिमनूद्य खण्ड्यते । तथाहि – कर्तुः वाच्यत्वं विना न सङ्ख्यान्वयानुपपत्तिरिति न। यथा आख्यातवाच्यकर्तुः स्वभिन्नपदोपस्थापिते प्रथमान्तचैत्रपदोपस्थाप्ये चैत्रे अन्वयः नियम्यते। तथा सङ्ख्यायाः अपि प्रथमान्तपदोपस्थाप्येनैवान्वयः इति वक्तुं शक्यत्वात् इत्यत्रापि **समाधानमिदम्।** अम्बायां भीष्मः इतिवत् परस्पराकाङ्क्षारहितयोः पदार्थयोर्यथान्वयः अशक्यः तथा प्रकृतेपि आख्यातोक्तसङ्ख्यायाम् अम्बास्थानीयायां भीष्मवत् प्रातिपदिकार्थः निराकाङ्क्षः इति पूर्वमेवोक्तः दोषः। यथा चैत्रः तण्डुलं "पचति" इत्यत्र प्रातिपदिकार्थः सुप्-प्रत्ययोक्तसङ्ख्यान्वितः नैव आख्यातोक्तसङ्ख्याम् अपेक्षते। अत्र ग्रन्थे अम्बायां भीष्मेति दृष्टान्तमादाय तत्कथाभागानुसारेण अत्र

अग्रे विचारः बहुसाम्यरूपेण विवृतमिति विशेषः। तदेवम् अम्बा तावत् स्त्री। सङ्ख्या च स्त्री। एवं प्रातिपदिकार्थः पुमान्। भीष्मश्च पुमानिति बोध्यम् । इति दृष्टान्तदार्ष्टान्तिकभावः।

एवं खण्डनेनैव आख्यातोक्तसङ्ख्यायाः स्वभावादेव प्रथमान्तार्थोक्तान्वयः इति मतमपि खण्डितम् । परस्पराकाङ्क्षाभावस्य निरूपितत्वात्। चैत्रस्य आदावेव अन्तरङ्गसुप्-विभक्त्यैव चरितार्थत्वादिति यावत्। उक्तरीत्या अर्थात् मन्मते तु प्रातिपदिकार्थयोः चैत्रकर्त्रोरभेदान्वयः उभयत्राप्यबाधितः इत्यनेन अन्यथैवोपपत्तौ स्वभावकल्पनायोगादिति बोध्यम् । यथा व्यतिरेकदृष्टान्तः शब्दस्वभावकल्पना तत्रैव क्रियते यत्र नान्यथैवोपपत्तिः। 'स्वर्गकामो यजेत' इत्यादिषु आख्यातप्रत्ययार्थभावनाभाव्यत्वं सन्निहितत्वेन एक- पदोपात्तत्वेन यागे यद्यपि वक्तुमुचितम् । परं व्यवहिते स्वर्गे भावनाभाव्यत्वं प्रतिपाद्यते अन्यथानुपपत्तेः । अतो न सन्निहितत्वम् (एकपदोपात्तत्वरूपं) अन्वये मुख्यं कारणम् । अपि तु व्यवहितस्यापि सति बाधके सम्बन्धसत्वम्। अत्र क्लेशरूपत्वेन यागस्य भावनाभाव्यत्वाभावाच्च इति बोध्यम् ।

इतःपरं 'सम्प्रदायस्तु' इत्यादिना मण्युक्तान्यथासिद्धिमाशङ्क्य समाधीयते। तथाहि – मण्युक्तान्यथासिद्धिप्रकारः – कर्तुरवाच्यत्वेऽपि न सङ्ख्यान्वयनियमानुपपत्तिः। एकपदोपात्ता या भावना तया अन्वयि यद्वर्तते, तेन सङ्ख्यायाः नियमेनान्वयाभ्युपगमात् । अत्र च भावना नाम साधनसमूहविषयकः यत्नविशेषः इति बोध्यम् । अस्तु भावनान्वयी किम्? येन सङ्ख्या तेनान्वेति इत्युक्ते तदेवम् । भावना च व्यापारतया व्यापारवन्तं नाकाङ्क्षतीति चैत्रस्तण्डुलान् "पचति" इत्यत्र प्रथमान्तार्थे चैत्रेऽन्वेति । अत्र च चैत्रः शुद्धः तण्डुलाश्च व्यापारवन्तः न शुद्धाः। यतस्तण्डुलाः कर्मभूताः कर्मरूपत्वं च तण्डुलानां कर्मणि द्वितीया इति कर्मकारके द्वितीयाविधानेन गम्यते। व्यापारविशिष्टत्वं

च तण्डुलानां क्रियां कुर्वद्धि कारकम् इति रीत्या व्यापारवदेव क्रियां कुर्वद्भवति इति व्यापारयुक्तत्वेनैव तण्डुलप्रतीतिः। एवञ्च व्यापारविशिष्टे व्यापारस्य नाकाङ्क्षा इति व्यापारविशिष्टे तण्डुले आख्यातार्थव्यापाररूपभावनायाः नान्वयः। अपि तु व्यापाररहिते चैत्रे प्रथमान्तपदोपस्थाप्ये अन्वयः अकाङ्क्षासद्भावात् । अत्र चैत्रश्च शुद्धः न व्यापारविशिष्टः। अत्र गमिका प्रथमाविभक्तिः। प्रातिपदिकार्थलिङ्गपरिमाणवचनमात्रे प्रथमा इति शुद्धे प्रातिपदिकार्थे एव प्रथमायाः अनुशासनादिति बोध्यम् । अत्र तद्विशिष्टे तदन्वयः यथानुभवविरुद्धः तथा तद्विशिष्टे तदाकाङ्क्षाया अपि विरोधः बोध्यः। एतत्सर्वं कर्तरिप्रयोगे ।

कर्मणिप्रयोगे च – चैत्रेण तण्डुलाः पच्यन्त इत्यत्र आख्यातोक्तव्यापाररूपभावनायाः तण्डुलपदार्थे शुद्धे आकाङ्क्षासत्वात् अन्वयः। न तु तृतीयान्तपदोपस्थाप्ये चैत्रे। यतः कर्तृकरणयोस्तृतीया इति कर्तरि तृतीयाभिधानात् पूर्वोक्तरीत्या व्यापारविशिष्टश्चैत्रः इति तद्विशिष्टे तस्य नाकाङ्क्षा इति प्रथमान्तपदोपस्थाप्येषु तण्डुलेष्वेव अन्वयः व्यापाररूपभावनायाः इति बोध्यम्। एवञ्च प्रकृते आख्यातेन कर्तुरवाच्यत्वेपि न सङ्ख्यान्वयानियमप्रसङ्गः। यं यं भावनानुधावति तं तं सङ्ख्यापीति वक्तुं शक्यत्वादिति ।

एवञ्च आख्यातसङ्ख्या, कर्तृकर्मप्रयोगभेदेन (कर्तरि प्रयोगे, कर्मणि प्रयोगे इति यावत्) चैत्रतण्डुलादिषु अन्वेति, स्वसहचरितभावनान्वयप्रयोज्यान्वयवत्वादिति नियामकस्य वक्तुं शक्यत्वात् न सङ्ख्यान्वयानुपपत्तिः । अत एव अवाच्येष्वपि सङ्ख्यान्वयाप्रसङ्गः इति न कर्तुः न वा कर्मणः आख्यातवाच्यत्वमङ्गीकर्तुं शक्यम् ।

समाधानम् – भावना यत्र गच्छति तत्र सङ्ख्यापि तयाऽऽनीयत इति इति कथनमात्रेण आख्यातोक्तसङ्ख्यायाः प्रातिपदिकार्थे चैत्रादौ अन्वयस्य निरू-

पयितुमशक्यत्वात्। चैत्रस्यादावेव सुप्-विभक्त्युक्तेत्यादिपूर्वोक्तरीत्या अम्बायां भीष्मः इतिवत् परस्पराकाङ्क्षाविरहिणोः अनन्वयस्यैवोचितत्वात्।

किञ्चाङ्गीकृतेऽपि भावनान्वयिनि सङ्ख्यायाः अन्वयः विकल्पचतुष्टयमुपस्थाप्यते दोषश्चाभिधीयते। तथाहि – (१) सङ्ख्यापि किं यथाकथञ्चिद् भावनान्वयिनान्वेति उत (२) साक्षाद्भावनान्वयिनान्वेति । (३) अथ आश्रयत्वेन भावनान्वयिनान्वेति यद्वा (४) भावनां प्रति विशेष्येणान्वेति ?

नाद्यः । एवं सति चैत्रः तण्डुलान् "पचति" इत्यत्र आख्यातोक्तसङ्ख्यायाः तण्डुलेषु अन्वयः स्यात् यथाकथञ्चिदित्युक्तत्वात् । तथाहि – भावनायाश्च स्वनिष्ठविषयितानिरूपितविषयतासम्बन्धेन तण्डुलकर्मकपाके अन्वयः। एवञ्च यं यं भावनानुधावति तं तं सङ्ख्यापीति यथा कथञ्चिद् सङ्ख्यान्वयविवक्षणे तण्डुलकर्मकपाकपदार्थप्रविष्टे सङ्ख्यायाः अन्वयः स्यात् । तण्डुलानां परम्परया भावनान्वयित्वात् ।

न द्वितीयः। भावनान्वयश्च साक्षाद् धात्वर्थे पाक इति तत्रैव सङ्ख्यान्वये एकः पाक इति चैत्रस्तण्डुलान् "पचति" इत्यत्रानुभवाननुसारिबोधः स्यात् ।

न तृतीयः । भावनाश्रयश्च कर्ता, न तु कर्म इति चैत्रः तण्डुलान् "पचति" इत्यत्र भावनाश्रये चैत्रे सङ्ख्यान्वयसम्भवेपि तण्डुलाः पच्यन्त इत्यत्र तण्डुलेषु सङ्ख्यान्वयस्य इष्यमाणत्वेऽपि न स्यात् । भावनायाः तण्डुलाः अनाश्रयाः इति । यतः भावना यत्नविशेषरूपा । सा च चेतनाश्रिता । एवञ्च भावनान्वयिनि सङ्ख्यान्वयनियमस्वीकारात् अत्र तन्न स्यात् ।

न चतुर्थः । भावनां प्रति विशेष्येण सह सङ्ख्यायाः अन्वयः इति पक्षश्च यद्यपि पूर्वोक्तपक्षापेक्षया उचितः। तण्डुलाः पच्यन्त इत्यत्र सङ्ख्यायाः तण्डुलेष्वन्वयसम्भवात् । तथाहि –यद्यपि भावनां प्रति विशेष्यत्वं न तण्डुलानाम्

आश्रयत्वापरपर्यायत्वात् विशेष्यत्वस्य । भावनायाश्च यत्नरूपत्वेन तण्डुलानां तदाश्रितत्वाभावात् । तथापि भावनाविषयत्वप्रकारकबोधे यद्विशेष्यं तत्र सङ्ख्यायाः अन्वयः इति अस्य कल्पस्यार्थः । एवं सति तण्डुलाः पच्यन्त इत्यत्र एवं बोधः पाककृतिविषयाः तण्डुलाः इति । अस्मिन् बोधे भावनाविषयत्वप्रकारकत्वं तण्डुलविशेष्यकत्वं चास्तीति भावनां प्रति विशेष्यभूतेषु तण्डुलेषु आख्यातोक्त-बहुत्वसङ्ख्यायाः अन्वयः सम्भवतीति ।

परमन्यत्र चैत्रो जानाति, इच्छति, प्रयतते इत्यादौ धात्वर्थविषयिकातदतिरिक्ता च या भावना तस्याः अभावेन तदन्वयाभावप्रयुक्तसङ्ख्यान्वयानापत्तिः। अर्थात् जानातीत्यत्र धात्वर्थभूतज्ञानातिरिक्तकृतिरूपाभावना नाख्यातोक्ता भवितुमर्हति। ज्ञानादीनां क्रमभावित्वात् । ज्ञानेच्छाप्रयत्नविषयभावनायाः एव अभावादिति भावः । अतः यं यं भावनानुधावति तं तं सङ्ख्या इत्यस्य वक्तुमशक्यत्वेन सङ्ख्यान्वयानापत्तेः कल्पोयं दुष्टः।

कथं तर्हि पूर्वोक्तप्रयोगेष्वन्वयः? इत्यतः इदमुत्तरम् – आख्यातात् आश्रयत्वेन कर्तुरुपस्थितौ तस्य सङ्ख्यान्वये च सति समानाधिकरणप्रातिपदिकार्थेन अभेदान्वयः इति । अत्र आख्यातात् आश्रयत्वेन कर्तुरुपस्थितिर्नाम परमते भावनाश्रयत्वेन अस्मन्मते व्यापाराश्रयत्वेन वेत्यर्थः। अथवा कर्त्रर्थोपजीवनेन लकारविधानात् आश्रयत्वेन निमित्तत्वेन लकाराद्युत्पत्तेः लकारवाच्यत्वेनेत्यर्थः। अथवा सङ्ख्यां प्रति आश्रयत्वेन कर्तुरुपस्थितौ इत्यर्थः ज्ञेयः। एवञ्च चैत्रो जानातीत्यत्र "चैत्रेण सुप्यते" इत्यादौ यथा बोधवर्णनं तथैव । उभयत्रापि धात्वर्थातिरिक्तभावनायाः अभावात् सङ्ख्यायाः वाच्यार्थगामित्वनियमाच्च । अत्रेदं बोध्यम् – अस्मन्मते तु ज्ञानविषयकव्यापारस्य अङ्गीकारात् तदाश्रयस्य चैत्रेणान्वयः सम्भवतीति बोध्यम् । परमिच्छतीत्यादिप्रयोगेषु

इच्छानुकूलयत्नाभावेन इच्छारूपव्यापाराश्रयः चैत्रः इति बोधं प्रवर्ण्य आख्यातोक्तसङ्ख्यायाश्च न चैत्रे अन्वयः । तर्हि कथं चैत्रे सङ्ख्याप्रतीतिः इत्यत्र सुप्-विभक्त्युपस्थापितसङ्ख्यान्वयेनेति बोध्यम् । तदनन्तरं सुप्-विभक्तिबोध्यसङ्ख्याविशिष्टस्य आख्यातबोध्यसङ्ख्याविशिष्टस्याभेदेन बोधे सङ्ख्यायाः ऐक्ये पर्यवसानम्, न तु शब्देन लभ्यते इति बोध्यम् ।

अत एव सङ्ख्यायाः वाच्यार्थगामित्वनियमादेव सुप्यते चैत्रेण इति भावाख्यातस्थले एवं सकर्मककर्तरिप्रयोगे च सतोरपि सङ्ख्यान्वययोग्ययोः कर्तृकर्मणोरवाच्यत्वात् न सङ्ख्यान्वयप्रतीतिः । अत्र सुप्यत इति ञिष्वप्शये इत्यस्य धातोः भावे रूपमिति बोध्यम् । यद्वा, "चैत्रेण सुप्यते" इत्यादौ सतोरपि कर्तृकर्मणोः इत्यत्र कर्मग्रहणस्यैवमर्थः – आद्यस्य चतुर्थे पादे 'गति बुद्धि .....' इति पाणिनीयसूत्रे –

**कालभावाध्वगन्तव्याः कर्मसञ्ज्ञा ह्यकर्मणाम् ।**

इति मञ्जर्याद्युक्तेः भावाख्यातस्थले तदभिप्रायेण कर्मोक्तिरिति बोध्यम् ।

अथवा सङ्ख्यान्वयप्रतीतौ सत्यां सुप्यतेत्यत्र भावार्थकप्रत्ययस्य कर्माभावात् कर्तरि अन्वये अनुभवविरोधाच्च (सर्वत्र चैत्रेण, चैत्राभ्यां, चैत्रैः इति प्रयुक्तेपि सुप्यत इति एकवचनेनैव प्रयोगात्) । परिशेषात् शाब्देन स्वापेनैवान्वयो वाच्यः इति द्वित्वबहुत्वादीनां स्वापेऽन्वये चैत्रेण सुप्येते, चैत्रेण सुप्यन्ते इत्यादिप्रयोगाः स्युः । द्वैतमते तु भावाख्यातस्थले सङ्ख्यायाः आख्यातावाच्यत्वं स्वीकृत्य निर्वाहः क्रियते । तत्र न सङ्ख्यान्वयप्रतीतिः केवलं चैत्रकर्तृकस्वापः इति "चैत्रेण सुप्यते" इत्यस्मात् बोधः ।

न च धात्वर्थस्वापे आख्यातोक्तसङ्ख्यायाः अन्वयास्वीकारे तत्र द्विवचनबहुवचनयोरसाधुत्वमेव प्रयोजकमिति वाच्यम् । परमेतन्न युक्तम् । धात्वर्थ-

स्वापे द्वित्वबहुत्वान्वययोग्यतासद्भावेन अर्थादर्थस्य सत्वेन असाधुत्वकथनस्य वाङ्मात्रत्वादिति बोध्यम् ।

किञ्चाङ्गीकृत्य स्वापे सङ्ख्यान्वयप्रत्ययेपि भावोत्पन्नलकारेण अर्थात् 'धात्वर्थः केवलः शुद्धः भाव इत्यभिधीयते' इत्युक्तेः धात्वर्थरूपभावार्थविहित-लट्प्रत्ययरूपलकारेण (लः कर्मणि च भावेचाकर्मकेभ्यः) सङ्ख्यां प्रति आश्र-यत्वेन धात्वर्थरूपभावोपस्थितौ तत्र च सङ्ख्यान्वये सति सङ्ख्यावताख्याता-र्थेन भावेन धात्वर्थस्याभावस्याभेदान्वयः इति न सङ्ख्यायाः वाच्यगामित्व-नियमभङ्गः इति बोध्यम् ।

अत्र च आख्यातार्थः भावः इति अभ्युपगमवादोऽयम् । एवंस्वीकारे शिंशुपावृक्षयोः यथा सामान्यविशेषाभावेनान्वयः तथा स्वापरूपभावधात्वर्थ-योः सामान्यविशेषभावेन परस्परमन्वयः इति “चैत्रेण सुप्यते” इत्यादौ सङ्ख्यान्वयप्रतीतिनिर्वाहाय आख्यातेन भावस्य वाच्यत्वमङ्गीकृत्य तस्मिन्नेव आख्यातोक्तसङ्ख्यायाः अन्वयो वक्तव्यः। तदनन्तरं स्वापस्य सङ्ख्याविशिष्ट-भावस्य च अन्वयः इत्यादिरीत्या बोध्यम् । इति आख्यातोक्तसङ्ख्यायाः आख्यातोक्तवाच्यगामित्वनियमः ।

**केचन** आख्यातस्य शक्यार्थः कर्तृत्वं कर्मत्वमिति निरूपयन्ति । न तु तद्धर्मि कर्तृ कर्म वा । तयोः कर्तृकर्मणोः “चैत्रः पचति” इत्यादिषु चैत्रादि-प्रातिपदिकादेव लाभात् । शब्दार्थश्च अनन्यलभ्यः शब्दार्थः इति नियमेन अन्यलभ्यः न भवेत् । कर्तृत्वं कर्मत्वं च नान्यतः लभ्यत इति तयोराख्यातश-क्यत्वम् इति । अतः आख्यातात् अन्येन चैत्रादिप्रातिपदिकात् कर्तृत्वादेर-लाभात् कर्तृत्वादिकमेव आख्यातवाच्यमिति । चैत्रादि प्रातिपदिकाच्च कर्ता उपस्थातुमर्हति । न तु तद्गतः धर्मः । चैत्रपदस्य धर्मिवाचकत्वादिति बोध्यम्

**केचिन्मतखण्डनम्** – तथाहि – अत्र कर्तापि प्रातिपदिकेन चैत्रादिना एवं कर्म च प्रातिपदिकेन तण्डुलादिना आख्यातादन्येन न लब्धमिति तयोराख्यातवाच्यत्वम् । न च चैत्रादिप्रातिपदिकादेव तल्लाभप्रकारोक्तः इति वाच्यम् । चैत्रादिपदात् कर्तृविशेषस्योपस्थितावपि कर्तृसामान्यस्य अनुपस्थितेः । यतः कर्ता नाम व्यापाराश्रयः । स च न चैत्रपदमात्रश्रवणेन व्यापाराश्रयोपस्थितिः भवितुमर्हतीति न तस्य व्यापाराश्रयरूपकर्तुः चैत्रादिपदलभ्यत्वमिति अनन्यलभ्यः शब्दार्थः इति नियमेन कर्तृकर्मद्वयमाख्यातवाच्यं भवितुमर्हति । अपि च "चैत्रः पचति" इत्यादिप्रयोगेषु कर्तुः प्रातिपदिकार्थेन चैत्रेण अभेदान्वयस्य व्युत्पत्तिसिद्धत्वम् । अथ च कर्तुरेव अभेदान्वययोग्यतया कर्त्रर्थकत्वमेवाख्यातस्योचितम् ।

आख्यातस्य कर्त्राद्यर्थकत्वे व्याकरणानुरोधोऽपि साधकः इति तेषां मतमयुक्तम् । तदित्थम् – द्वितीयाध्यायस्य तृतीये पादे 'अनभिहिते' इत्यधिकृत्य कर्मणि द्वितीया, कर्तृकरणयोस्तृतीया इति तिङाद्यनुक्ते कर्मणि द्वितीया, तिङाद्यनुक्ते कर्तरि करणे च तृतीया इति तिङाद्यनभिहितयोः कर्तृकर्मणोः द्वितीये भवतः । तेन तिङाद्यनभिहिते कर्तरि कर्मणि च तृतीयादिकं भवतीति कथनेन चैत्रः तण्डुलान् "पचति" इत्यत्र तण्डुलशब्दाद् द्वितीया न तु "चैत्रेण तण्डुलान् पचति" इति प्रयोगः । अन्यथा त्वत्पक्षे कर्तृत्वस्य आख्यातार्थत्वे कर्तुः आख्यातेनानभिहितत्वात् चैत्रेण इति तृतीया स्यादिति भावः । अस्मत्पक्षे च कर्तुरेवाख्यातार्थत्वेन तस्य "पचति" इति तिङाभिहितत्वात् अभिहिते प्रथमा इति प्रथमैव न तु तृतीया । एवं चैत्रेण तण्डुलाः पच्यन्त इत्यत्र चैत्रेण तण्डुलान् पच्यते इति न भवतीति कर्मणि द्वितीयेत्यादिव्युत्पादकव्याकरणमपि अनुकूलितं भवति । अन्यथा नैय्यायिकरीत्या कर्तृकर्मणोः आख्यातानभिहितत्वं न द्वितीया तृतीयाप्रयोजकम् अपि तु तद्गतसङ्ख्याभिधानानभिधानमेव

तत्प्रयोजकमिति सूत्रार्थनिरूपणे कर्मणि द्वितीयेत्यादिसूत्रस्थधर्मिवाचक-कर्मादिपदविरोधः स्यात् ।

अन्यदपि आनुगुण्यमस्ति । तथाहि – "चैत्रः पचति" इत्यत्र शब्दयोः चैत्रः पचति इत्यनयोः सामानाधिकरण्यं कर्तुराख्यातार्थत्वे सिद्धम् । अन्यथा कर्तृत्वस्य आख्यातार्थत्वे अनयोः सामानाधिकरण्यं न स्यात् । न च कर्तुराख्यातार्थत्वेऽपि सामानाधिकरण्यं न सिद्ध्यति । यतः सामानाधिकरण्यं नाम एकविभक्त्यन्तपद- वाच्यत्वम् । अत्र च शब्दयोः चैत्र पचति इत्यनयोः न समानविभक्तिकत्वम्, सुप्तिङ्रूपविभिन्नविभक्तिमत्वात् इति वाच्यम् । अन्यविधसामानाधिकरण्यविवक्षणात् । अपि च इदमेव सामानाधिकरण्यं मुख्यम् । तच्चेदम् – भिन्नप्रवृत्तिनिमित्तानाम् एकस्मिन्नर्थे वृत्तिरूपम् । अत्र बहुवचनान्तेन "भिन्नप्रवृत्तिनिमित्तानामि"ति पदेन न्यायोपपदानमात्रम् । अर्थात् सकलवाक्यसङ्ग्राहकतया उपयुक्तम् । न तु प्रकृताभिप्रायेण, चैत्रः पचति इति शब्दद्वयमात्रसत्वात् । तथा च चैत्रत्वं चैत्रपदप्रवृत्तिनिमित्तम् । आख्यातस्य च कर्तृत्वं निमित्तमिति भिन्नप्रवृत्तिनिमित्तयोः चैत्र पचति इत्यनयोः शब्दयोः न्यायसिद्धसामान्याधिकरण्यमपि सिद्धं भवति इति बोध्यम् ।

न च आख्यातस्य कर्तृत्ववाचकत्वेऽपि चैत्र पचति इत्यनयोः शब्दयोः सामानाधिकरण्यमुपपादयितुं शक्यम् । यथा चैत्रगतसङ्ख्या एकत्वसङ्ख्या । "पचति" इत्यत्र प्रतीयते एकत्वसङ्ख्या । एवं चैत्रः इत्यत्र सुप्-विभक्त्या एकत्वसङ्ख्या प्रतीयते । एवञ्च एकस्मिन्नर्थे चैत्रे वृत्तिर्या एकत्वसङ्ख्या तद्बोधकत्वेन चैत्र पचति इत्ययोः शब्दयोः सामानाधिकरण्यमिति वाच्यम् । लोकानुभवविरुद्धत्वात् । अत्र एकसङ्ख्या इत्यादिकं पूर्वपक्षिणा एतदभिप्रायेणोक्तम् – प्रवृत्तिनिमित्तयोरेकत्राभावेन तद्बोधनेन सामानाधिकरण्यायोगात् । अथवा उभयोः सङ्ख्ययोः वृत्त्यभावेन अर्थात् कर्तृत्वनिष्ठा एकत्वसङ्ख्या न चै-

त्रनिष्ठा । कर्तृत्वसङ्ख्यानिष्ठा च सङ्ख्या आख्यातबोधिता । चैत्रपदोत्तरसु-विभक्त्या च बोधिता सङ्ख्या न कर्तृत्वनिष्ठेति उभयोरेकत्र अवृत्तित्वम् । अथवा चैत्रपचतिशब्दयोरेकस्मिन्नर्थे वाचकत्वाभावः इति रीत्या कथञ्चित् "चैत्रः पचति" इतिस्थले उभयगतसङ्ख्या एकनिष्ठा इति बोधरूपा वर्णनीया भवेत् । सा च लोके अप्रसिद्धा इति ।

तस्मात् पाचकः इत्यादाविव "पचति" इत्यत्रापि सङ्ख्यायाः आख्या-तोक्तायाः स्ववाच्ये एव कर्तरि आश्रयतासम्बन्धेनान्वयः वाच्यः । न तु भिन्न-पदोपात्तनिराकाङ्क्षा प्रातिपदिकार्थेन चैत्रेणान्वयः । तस्मात् कर्तृकर्मणी एव लकारवाच्ये ।

अस्मिन् विषये भगवत्पादानां वचनम् –"कर्मकर्तृव्यपदेशाच्च" इति ब्रह्म-सूत्रे भाष्ये 'आत्मानं परस्मै शंसति' इति श्रुतौ शंसतीति आख्याते न जीवस्य शंसनकर्तृत्वमुच्यते इत्युक्तम् । अयं च अर्थानुवादः इति बोध्यः ।

एवमेव मिथ्यात्वानुमानखण्डने 'दृश्यते त्वग्र्यया बुद्ध्या' इति श्रुतौ दृश्यत इति आख्यातेन ब्रह्मणः दृक्कर्मत्वमुच्यते इति सूचितम् ।

न च इमे प्रयोगाः पूर्वपक्षिमतानुकूलाः यतः अत्रोदाहृतेषु शंसनकर्तृत्वं, दृक्कर्मत्वमुच्यत इति वदता आख्यातस्य कर्तृत्वं कर्मत्वं चार्थः इति वर्णितः भातीति वाच्यम् ।

परिहारः – एवं प्रयोगाः द्वैतग्रन्थेषु दृश्यन्ते ब्रह्मशब्देन गुणपूर्णत्वमुच्यते इत्यादिना । अर्थात् प्रवृत्तिनिमित्तरूपमर्थं स्वीकृत्य शब्दार्थवर्णनं क्रियते । तावन्मात्रेण तत्पदं तत्र शक्तमिति न । अपि च कर्तृत्वं व्यापारविशेषः । विषयतासम्बन्धेनेति शेषः। एवञ्च व्यापारविषयरूपः कर्ता शंसतीत्यत्र आख्यातपदबोध्यः । अथवा कर्तृत्वमित्यनेन व्यापारे आश्रये च शक्तिरिति

पूर्वं कथनात् आश्रयत्वं च कर्तृत्वम् । तच्चाश्रयस्वरूपमिति आश्रय एव आख्यातपदस्य शक्तिः प्रदर्शिता ।

अथवा कर्तृत्वपदेन व्यापारः उक्तः; स च योग्येतरान्वितः इति व्यापाराश्रयरूपः प्रतीयते एव । इति अभेदेन व्यापाराश्रयाभिन्नकर्तुः बोधः । इत्यादिरीत्या चिन्तनीयम् ।

## तर्कताण्डवे धातोर्मण्डनोक्तफलवाचित्वनिरूपणम्

मण्डनस्तु एवमाह – विक्लित्तिरेव पच्-धात्वर्थः; तज्जनकः अधःसन्तपनादिरेवाख्यातार्थः इति । अत्र परिशेषरूपयुक्तिः प्रदर्श्यते । तथाहि – यदि धात्वर्थः विक्लित्तिर्न चेत्, तर्हि पच्यादिधात्वर्थः विक्लित्त्यनुकूलव्यापारः इति वक्तव्यम् । तदानीं विकल्पः । सः धात्वर्थः किं व्यापारमात्रम्, फलोपरक्तो वा? तत्रापि द्वितीये फलोपलक्षितव्यापारो वा फलविशिष्टव्यापारो वा? इति विकल्पः । न तावदाद्यः । यतः व्यापारत्वेन विक्लित्त्यनुकूलव्यापारस्य पच्--धात्वर्थत्वे गमनादावपि व्यापारत्वसत्वेन पच्यादिप्रयोगः स्यात् । अथ विक्लित्त्यादिफलोपहितस्य धात्वर्थस्य व्यापारत्वे फलस्योपलक्षणत्वपक्षे गमनादावपि इत्युक्त एव अतिप्रसङ्गः । यतः यथा 'काकवत् देवदत्तगृहम्' इत्यादौ उपलक्षणं काकः, उपलक्ष्यं देवदत्तगृहं, उपलक्ष्यतावच्छेदकत्वम् उत्तृणत्वम् इत्युच्यते तथा अत्र अन्यूनानतिप्रसक्तरूपस्य उपलक्ष्यतावच्छेदकस्य अभावात् वक्तुमशक्यत इति यावत् । न चोपलक्ष्यतावच्छेदकम् अनुगतमधःसन्तपनत्वम् अस्तीति वाच्यम्, असम्भवात् । यतः विक्लित्त्यनुकूलव्यापारः न केवलमधःसन्तपनम्, अपि तु तदतिरिक्तं बहु वर्तते । तेषु सर्वेषु अनुगतमुपलक्ष्यतावच्छेदकं नास्ति । यथा काकेभ्यो दधि रक्ष्यतामित्यादिषु अनुगतमुपलक्ष्यतावच्छेदकं दध्युपघातकत्वमस्ति, न तथा प्रकृते ।

ननु अत्रापि अनुगतम् उपलक्ष्यतावच्छेदकमस्ति । तच्च अधःसन्तपनादिषु व्यापारेषु विक्लित्तिजनकत्वरूपम् । परमेतदप्ययुक्तम् । यतः विक्लित्तिजनकत्वरूपव्यापारस्योपलक्ष्यतावच्छेदकत्वे, उपलक्षणस्य विक्लित्तिरूपस्य उपलक्ष्यतावच्छेदककोटौ प्रवेशेन उपलक्षणत्वं भज्येत । यतः उपलक्षणत्वं नाम उपलक्ष्यकोटौ अप्रविष्टत्वे सति व्यावर्तकत्वम् । अतः व्यापारत्वेन व्यापारस्य पच्यादिधात्वर्थत्वे पुनरतिप्रसङ्गः तदवस्थ एव । तर्हि अतिप्रसङ्गवारणाय विक्लित्तेर्वाच्यकोटौ अन्तर्भावः क्रियते । एवञ्च गमनादौ विक्लित्त्यनुकूलव्यापारत्वाभावेन पच्यादिप्रयोगाभावः। यतः वाच्यकोटौ अन्तर्भावेन, विक्लित्तेर्विशेषणतया उपस्थितत्वात् । एवञ्च नागृहीतविशेषणान्यायेन – विशेषणमविषयीकृत्य विशिष्टे बुद्धिः नोत्पद्यते इत्याकारकेण, अर्थात् विशेष्यस्य स्वतो व्यावर्तकत्वसामर्थ्याभावेन विशेषणस्यावश्यमङ्गीकरणीयतया प्रथमोपस्थितत्वेन लाघवाच्च पच्-धातोः फले एव शक्तत्वम्, न तु तदनुकूलाधःसन्तपनादिरूपव्यापारे । अन्ततः एवमङ्गीकारे गमनादौ च पच्यादिप्रयोगातिप्रसङ्गः नास्ति, विक्लित्त्यनुकूलव्यापारत्वाभावात् इति बोध्यम् ।

फलस्य धात्वर्थत्वे बाधकमाशङ्कते । तथाहि - विक्लित्त्यनुकूलाधःसन्तपनादिरूपव्यापारसमाप्त्यनन्तरं फलस्थितौ अपाक्षीदिति लोके प्रयोगः यद्यपि दृष्टः, परं फलस्य धात्वर्थत्वमते तदानीमपि फलसत्त्वेन "पचति" इति प्रयोगः स्यात् ।

समाधानम् - सत्यम् । अधःसन्तपनादिव्यापारसमाप्त्यनन्तरं विक्लित्तिरूपफलसत्त्वेऽपि आख्यातार्थस्य धात्वर्थानुकूलव्यापारस्य अतीतत्वेन, तदा "पचति" इत्यादिव्यापारवर्तमानत्ववाचकआख्यातप्रयोगस्यानुचितत्वात् । अर्थात् वर्तमानत्वमाख्यातबोध्यं विक्लित्तिरूपफले न बोध्यते । अपि तु तन्मतरीत्या आख्यातवाच्ये फलानुकूलाधःसन्तपनादिरूपव्यापारे । अतः फल-

सत्वेऽपि अधःसन्तपनादिरूपव्यापारस्य ध्वंसप्रतियोगित्वेन वर्तमानत्वान्वय-योग्यत्वाभावात् अपाक्षीत् इत्येव प्रयुज्यते न तु "पचति" इति ।

नन्वेवं फलस्य धात्वर्थत्वे तुल्यन्यायतया गच्छतीति गमिधातोः उत्तरदे-शसंयोगः अर्थः, 'पतति' इति धातोः अधोदेशसंयोगः, त्यजतीतिधातोः वि-भागोऽर्थः इति स्यात् । अत्र सर्वत्र देशपदेन तत्तत्प्रदेशावच्छिन्नाकाशः गृह्यते । एवञ्च संयोगविभागादेः द्विनिष्ठत्वात् गगनेऽपि पूर्वोक्तसंयोगादिस-म्भवेन गगनं गच्छति, गगनं पतति इत्यादिप्रयोगः स्यात् । विवक्षितधात्वर्थ-स्य तत्रापि सत्वात् - इत्याक्षेपे इदमुत्तरम् – आकाशे धात्वर्थस्य तत्तत्प्रदेशा-वच्छिन्नसंयोगस्य सत्वेपि व्यापाराभावेन व्यापारवर्तमानत्वाद्यर्थकस्य "गच्छति गगनम्, अगच्छत् गगनम्" इत्यादिप्रयोगाभावः । न च गम्लृधातोः प्रयोगः आकाशपदात् स्यात् । संयोगस्य द्विनिष्ठत्वात् इति वाच्यम् । एतदयुक्तम् । केवलप्रकृतेः प्रयोगाभावादिति बोध्यम् ।

बाधकान्तरं च प्रदर्श्य निराक्रियते । यदि फलं धात्वर्थः तदा "चैत्रस्त-ण्डुलं पचति" इत्यत्र तण्डुलस्य कर्मत्वं न स्यात् । यतः कर्मत्वं = क्रियाज-न्यफलशालित्वम् । क्रिया च धात्वर्थः। यथा भूवादयो धातवः इत्यत्र क्रिया-वाचिनामेव धातुत्वमुच्यते । परमत्र तु विक्लित्तिरूपफलस्य धात्वर्थत्वेन तस्य च क्रियात्वाभावेन धात्वर्थरूपक्रियाजन्यफलशालित्वाभावात् तण्डुलस्य कर्म-त्वं न घटेत ।

समाधानम् – न कर्मत्वं धात्वर्थक्रियाजन्यफलाश्रयरूपमेवेति नियमः । अपि तु परसमवेतव्यापारजन्यफलभागित्वम् । परसमवेतव्यापारस्य तन्मत-रीत्या आख्यातार्थो वा भवेत् । धात्वर्थो वा सिद्धान्तरीत्या भवेत् इत्यन्यदेत-त् । परं परसमवेतः आख्यातार्थभूतः यः अधःसन्तपनादिरूपव्यापारः तज्जन्या

या विक्लित्तिः तदाश्रयत्वात् तण्डुलानां कर्मत्वं सम्भवतीति न कोऽपि दोषः । तस्मात् फलमेव धात्वर्थः इति मण्डनमतम् ।

## तर्कताण्डवे मण्डनमतभङ्गः

यद्यपि 'मण्डनाचार्याः' इत्यादिना अनूद्य, एतन्मतं मणौ निरस्तमपि, व्युत्पादनार्थम् अधिकदोषोक्त्यर्थं च पुनरत्र ग्रन्थे उपन्यस्तमिति बोध्यम् ।

अत्र परोक्तं निरसितुं विप्रतिपत्तिं च दर्शयितुं स्वमतानुसारेण धात्वर्थादिकं प्रदर्श्यते । एवञ्च विक्लित्त्यादिरूपफलजनकः अधःसन्तपनादिव्यापार एव पच्यादिधात्वर्थः । उक्तधात्वर्थानुकूलशरीरस्पन्दादिः आख्यातार्थः । विक्लित्तिश्चात्र तण्डुलादेः अवयवशिथिलता (निबिडतापगमेन) ।

'इष्टसाधनत्वं विधिप्रत्ययार्थः' इत्युपपादितत्वेन तर्कताण्डवे आख्यातवादप्रकरणात् पूर्वम् उपपादितत्वेन तमेव स्थलमादाय तदन्वयाद्ययोगरूपबाधकं प्रदर्श्यते । यदि फलं धात्वर्थः विक्लित्त्यादिः तदा ओदनकामः पचेत इत्यत्र विधिप्रत्ययेन लिङ्प्रत्ययेन इष्टसाधनत्वं च धात्वर्थे विक्लित्तिरूपे एव बोधनीयम् । परं तदयुक्तम् । फलस्येष्टरूपत्वेन इष्टसाधनत्वरूपाभावात् । अत्र पचेत इति रूपं साधु एवेति बोध्यम् । तदित्थम् – पचतेः स्वरितेत्वात् कर्तृगामिक्रियाफले सति स्वरितञितः कर्त्रभिप्राये क्रियाफले इति आत्मनेपदविधानात् ।

अपि च फलस्य प्रवृत्त्यविषयत्वेन प्रवृत्तिविषये एव विधिप्रत्ययेन इष्टसाधनतत्वं बोधनीयं, प्रवृत्तिहेतुत्वात् बोधस्येति ज्ञेयम् । प्रवृत्त्यविषयत्वं च फलस्य एवम् – न हि स्वर्गादिफलम् उपायरूपं यागमकृत्वा साधयितुं शक्यम् । तथा इहापि विक्लित्तिरूपं फलं, तदनुकूलाधःसन्तपनादिरूपव्यापारमकृत्वा साक्षात् साधयितुं शक्यते । अतः फलसाधने प्रवृत्तिविषये अधः-

सन्तपनादिव्यापारे एव विधिप्रत्ययेन लिङ्प्रत्ययेन इष्टसाधनत्वं बोधनीयमिति फलानुकूलव्यापारएव अर्थात् विक्लित्त्यनुकूलाधःसन्तपनादिव्यापार एव पच्यादिधात्वर्थः ।

आशङ्का – यदि विधिप्रत्ययबोध्यमिष्टसाधनत्वं धात्वर्थान्वयि स्यात् तदा स्यादयं दोषः । न चैवम् । किन्तु आख्यातार्थान्वयि इति । यथा प्रकृते ओदनकामः पचेतेत्यत्र लिङ्प्रत्ययबोध्यमिष्टसाधनत्वं तेनैव प्रत्ययेन आख्यातत्वेन रूपेण बोध्ये अधःसन्तपनादिरूपव्यापारे बोध्यते । तस्य च इष्टरूपायाः विक्लित्तेः साधनत्वं वर्तते एव । एवम् एकपदोपात्तयोरर्थयोः परस्परान्वयः दृष्ट एव । यथा लडर्थस्य वर्तमानत्वस्य तेनैव लट् प्रत्ययेन आख्याततत्वेन रूपेण वाच्ये व्यापारे अधःसन्तपनादौ अन्वयः ।

परिहारः – न चेदं युज्यते । यतः आख्यातार्थस्य अधःसन्तपनादिरूपस्य व्यापारस्य धात्वर्थेन विक्लित्तिरूपफलेन सह जनकतयान्वितत्वेन इष्टसाधनत्वस्य लिङ्प्रत्ययापेक्षया अन्येनैव (अर्थात् अन्वयादिना) लाभात् प्रत्ययांशे इष्टसाधनत्वबोधकविध्यंशस्य वैय्यर्थ्यम् ।

आशङ्का – सत्यम् । अन्वयतया अर्थात् प्रकृतिप्रत्ययसमभिव्याहारलब्धस्य इष्टसाधनत्वस्य अन्वयरूपत्वेऽपि प्रकारत्वेन (अर्थात् एकप्रत्ययश्रुत्या) विशेषणविशेष्यतापन्नत्वेन बोधितयोः एव प्रकारप्रकारिरूपत्वेन तादृशप्रकारत्वस्य बोधनाय प्रत्ययांशे विध्यंशस्य सार्थक्यमस्त्येव । यतः इष्टसाधन- त्वप्रकारमेव हि ज्ञानं प्रवर्तकं दृष्टम् ।

समाधानम् – एवं तर्हि लिङ्बोधितमिष्टसाधनत्वमिति प्रत्ययार्थस्य तस्य, प्रथमान्तपदोक्तपदार्थेन सह आधाराधेयभावेन अन्वयस्य व्युत्पत्तिसिद्धत्वेन सर्ववादिसम्मतत्वेन च अङ्गीकार्यं स्यात् । न च तदङ्गीकर्तुं शक्यते, असम्भ-

वात् । तदित्थम् – लिङ्त्वेन लिङ्वाच्यं यदिष्टसाधनत्वं तस्य स्ववाच्ये एव अधःसन्तपनादेरन्वयात्, तस्य च अधःसन्तपनादेः चैत्रे स्वनिष्ठाधेयतानिरूपिताश्रयतासम्बन्धेनान्वयासम्भवात् । अधःसन्तपनादेः तण्डुलनिष्ठत्वेन चैत्रनिष्ठत्वाभावात् ।

आक्षेपः – तर्हि जनकाकाङ्क्षया आख्यातार्थस्याधःसन्तपनादेः स्वनिष्ठजन्यतानिरूपितजनकतासम्बन्धेन चैत्रे अन्वयः स्यात् । अतः न काप्यनुपपत्तिः ।

समाधानम् – एवं सति आख्यातार्थस्य प्रथमान्तपदार्थे अन्वयस्तु निरूपित एव । परं "चैत्रः पचति" इति यथा प्रयोगः तथा काष्ठं पचति, कालः पचति, देशः पचति इत्यादिप्रयोगाः स्युः । काष्ठादिष्वपि अधःसन्तपनादेः स्वनिष्ठजन्यतानिरूपितजनकतासम्बन्धेन सत्वात् ।

तस्मात् अस्मन्मतरीत्या फलानुकूलः अधःसन्तपनादिः धात्वर्थः, तदनुकूलस्पन्दादिश्च आख्यातार्थः, तस्य च कर्तरि स्वनिष्ठाधेयतानिरूपिताधिकरणतासम्बन्धेनान्वयः युज्यते इति न व्युत्पत्तिविरोधादिः ।

प्रथमान्तेन आधेयतयान्वयार्थं सन्तपनादिव्यापारमात्रस्य धातुवाच्यत्वेऽङ्गीकृते बाधकं वर्तते । तथा हि – यदि व्यापारत्वेन व्यापारमात्रं धातुवाच्यमङ्गीकृत्य फलम् अनन्तर्भाव्य उच्यते तदा त्यजति गच्छतीत्यनयोः समानार्थकतापत्तिः। यतः परिस्पन्दादिव्यापारमात्रस्योभयत्राविशेषात् । यदि फलस्यापि धात्वर्थत्वं स्वीक्रियते अर्थात् उत्तरदेशसंयोगजनकपरिस्पन्दः गमिधात्वर्थः एवं पूर्वदेशविभागजनकपरिस्पन्दः त्यजिधात्वर्थः इत्येवंरूपेण धात्वर्थप्रवेशो फलस्य शक्यत्वपक्षे इव इष्टसाधनत्वान्वयानुपपत्तिः। अर्थात् त्यजति गच्छतीत्यनयोः समानार्थकत्ववारणाय उत्तरदेशसंयोगपूर्वदेशविभागरूपार्थयोः

वाच्यार्थकोटौ प्रविष्टत्वम् अभ्युपगम्यते तर्हि समानार्थकत्ववारणेऽपि पूर्वं मण्डनमते फलस्य शक्यत्वपक्षे लिङर्थस्य इष्टसाधनत्वस्य अनन्वयप्रसङ्गः तदिदानीमपि समम् । तदित्थम् – फलविशिष्टो व्यापारः धात्वर्थः। तच्च फलसाधनमेवेति तत्र लिङर्थस्येष्टसाधनत्वस्य कथमन्वयः? यथा विक्लित्तिरूपे-ष्टजनकअधःसन्तपनादेः धात्वर्थत्वे कथं लिङर्थस्येष्टसाधनत्वस्य तत्रान्वयः। स्वविशिष्टे स्वनिवेशायोगादिति भावः ।

समाधानम् – प्रवृत्तिनिमित्तस्यापि वाच्यत्वं यद्यपि पूर्वं शक्तिग्रहवादे साधितमेव । तथापि फलस्य प्रवृत्तिनिमित्तत्वेन (अर्थात् शक्यतावच्छेदक-त्वेन) विशेष्यत्वाभावात् तेन रूपेण धातुना अवाच्यमेव । ननु यथाकथञ्चि-दपि धातुवाच्यत्वात् फलविशिष्टेऽपि व्यापारे कथम्? विधिप्रत्ययोक्तेष्टसाधन-त्वान्वयः इत्यतः विशेषणे फले नास्त्येवेष्टसाधनत्वान्वयः इत्युत्तरम् । यतः एकपदार्थस्य अपरशब्दार्थान्वयः इति नियमः विशेष्यभूते एव न तु विशेषणे । यथा चित्रगुमानय इत्यादौ विशेष्यस्य पुरुषस्य आनयनक्रियायामन्वयः । अथवा घटमानयेत्यत्र घटत्वविशिष्टघटे एव आनयनपदार्थान्वयः। एवञ्च फलविशिष्टव्यापारस्य धात्वर्थत्वपक्षे न काप्यनुपपत्तिः।

एवं त्यजति गच्छतीत्यनयोः समानार्थकत्वापत्तिवारणं प्रवृत्तिनिमित्त-भेदात्। अथ च पचतिगच्छत्योरपि एकार्थत्वापत्तिवारणमपि बोध्यम् । अयं विशेषः – त्यजति गच्छतीत्यनयोः स्वीकारे परस्परं सम्बद्धार्थः वर्तते इति भासते । केवलं व्यापारस्य धात्वर्थस्य पक्षे । परं फलप्रवेशे विरुद्धार्थकत्वं सम्पद्यते । अन्यथा देवदत्तः मथुरां प्रति गच्छति, देवदत्तः मथुरां त्यजति इत्यनयोरेकार्थत्वं स्यात् । एवं लिङर्थस्येष्टसाधनत्वस्यान्वयानुपपत्तिवारणं च विशेष्ये व्यापारे एव अपरशब्दार्थान्वयस्वीकारादिति बोध्यम् । अपि च वि-शेष्यमात्रे व्यापारे अन्वयस्वीकारे अतिप्रसङ्गः स्यादिति भासते । तदपि न ।

यथा विशिष्टपदार्थमध्ये केवलं विशेष्यस्य स्वीकारे स्थलविशेषेषु आपत्तिः तत्तत्समभिव्याहृतपदार्थवाचकपदबलेन वार्यते तथा इति बोध्यम् ।

इतःपरं केवलं फलमेव धात्वर्थः इति पक्षे व्यापारे प्रयोगान्वयव्यतिरेकरूपं बाधकं प्रदर्श्यते । तथाहि – यदि फलस्य धातुवाच्यत्वं तदानीं फलाभावकाले व्यापारसत्वकाले पाको वर्तत इति प्रयोगः इष्यते । सः न स्यात् । न चेयं शङ्का पूर्वोक्तरीत्यैव न च व्यापारविगमे इत्यादिरीत्यैव तुल्यन्यायतया परिहृतम् । पच्-धातूत्तराख्यातस्य अप्रयुक्तत्वेन अर्थात् केवलं पाकः इति यदा प्रयुक्तः तदानीं तत्राख्याताभावेन तदर्थव्यापारादेरभावात् नेयमापत्तिः इति तु वक्तुं न शक्यते । केवलं पाकः इति प्रयोगाभावात् । यदि परं पाकः पचति इति प्रयुज्येत तदा तदर्थव्यापारवर्तमानत्वमादाय "पचति" इति प्रयोगनिर्वाहः सम्भवेत् । अत्र तु पाको वर्तत इति प्रयोगः । एवञ्च एतस्मिन् स्थले पाकशब्दार्थस्य विक्लित्तिरूपतया तस्य च इदानीं व्यापारकाले अभावेन पाको वर्तत इति प्रयोगो न स्यात् । पाकः इत्यत्र च घञ् स्वार्थे इति बोध्यम् । तर्हि पाकः इति प्रयोगः पाकानुकूलव्यापारे लाक्षणिकोऽस्तु इति च न शङ्क्यम् । यतः अद्यापि विक्लित्तिरूपफले पच्धातोः शक्तिः न सिद्धा ।

एवमन्वयमुक्त्वा व्यतिरेकोऽपि समर्थ्यते । किञ्च एवं व्यापारसमाप्त्यनन्तरं फलकाले पाको वर्तत इति कदाचिन्मुख्यप्रयोगः स्यात् । पाकशब्दमुख्यार्थस्य विक्लित्तेः तदानीमपि सत्वात् । एवं व्यापारे प्रयोगान्वयव्यतिरेकदर्शनेन फले अदर्शनेन च फलानुकूलव्यापारस्यैव धात्वर्थमिति न मण्डनमतं समीचीनम् ।

## तर्कताण्डवे उपसर्गाणां वाचकत्वसमर्थनप्रकरणे आख्यातविचारः

यत्त मणौ शब्दखण्डे "उपसर्गास्तु द्योतकाः न वाचकाः" इत्यादिना द्योतकत्वमुक्तम् । तन्न इति भावेन धात्वर्थनिरूपणप्रसङ्गात् तत्संसृष्टोपसर्गा-

र्थोऽपि निरूप्यते । अत्र प्रजयति, प्रतिष्ठते इत्यादिपदान्यादाय विचारः प्रवृत्तः। प्रथमं प्रजयतीत्यत्र प्ररूपोपसर्गस्य प्रकर्षे शक्तिः अन्वयव्यतिरेकबलात् साधिता। जिधातोः जयमात्रे शक्तिः । एवञ्च प्रजयतीति शब्देन प्रकृष्टजयप्रतीतिः अन्यथा (अर्थात् प्रशब्दस्य उपसन्दानत्वापरपर्यायद्योतकत्वपक्षे) 'शुक्लां गामानय' इत्यादावपि शुक्लादिशब्दानां द्योतकत्वं स्यात् न तु वाचकत्वम् इत्यापादनं कृतम्। अयं विशेषः – प्रजयतीति प्रतिष्ठतीत्यनयोर्शब्दयोर्मध्ये बोध्यः – आद्ये उपसर्गे धातोश्चेति उभयत्र शक्तत्वमङ्गीकर्तुं शक्यम् । परं द्वितीये प्रशब्दस्य प्रकर्षे धातोश्च तन्निवृत्तौ शक्त्यङ्गीकारस्य अशक्यत्वम् । अतः अन्यतरस्य बोधकत्वमात्रम् अङ्गीकर्तव्यं स्यात्। अन्यथा प्रतिष्ठत इत्यत्र प्रकृष्टगतिनिवृत्तिबोधः स्यादिति बोध्यम्। अथवा प्रशब्दस्य गत्यर्थत्वे न धातोः तन्निवृत्त्यर्थकत्वं युज्यते, विरोधात्।

एवंरीत्या विचारसन्दर्भे प्रतिष्ठत इत्यत्र इयं प्रतिबन्दी दत्ता – यदि तव ष्ठाधातुः प्रोत्तरः गत्यर्थः तदनुत्तरस्तु गतिनिवृत्त्यर्थः इति नानार्थः, तर्हि ममापि प्रशब्दः ष्ठाधातुपूर्वः गत्यर्थः तदपूर्वस्तु प्रकर्षार्थः इति नानार्थोऽस्तु। यद्यपि अत्र प्रतिबन्दीदानसमये धातोरनर्थकत्वं स्वीकृतमिति भाति। परमग्रे (तर्कताण्डवे एव अग्रे इति बोध्यम्) तस्यापि सार्थकत्वमेव प्रतिपादितमिति अत्र पूर्वपक्ष्युक्तन्यायसाम्येनापादनमात्रं तर्कताण्डवकारेणात्रकृतमिति बोध्यम्।

तर्हि गमनस्य प्रशब्दार्थत्वे भावनान्वयो न स्यादिति मण्युक्तस्य बाधकस्य कः परिहारः? इत्यत्रेदमुत्तरम्। प्रथमं बाधकं विव्रियते । तथाहि – यदि गमनं धातोरर्थः, तदाख्यातप्रत्ययार्थस्य प्रयत्नस्य व्यापारस्य वा गमनेन सह जनकत्वरूपोऽन्वयो न स्यात्, यतः आख्यातप्रत्ययस्य स्थाधातुः प्रकृतिः न तु प्रशब्दः । अतः प्रत्ययानां प्रकृत्यर्थान्वितस्वार्थबोधकत्वस्य व्युत्पत्तिसिद्धत्वेन प्रशब्दार्थे गमने आख्यातार्थस्य स्वनिष्ठजनकतानिरूपितजन्यतासम्बन्धेनान्वयो

न स्यात्। परं गमनस्य धातुवाच्यत्वे प्रशब्दस्योपसन्दानमात्रपरत्वे च नायं दोषः। धातोः प्रकृतित्वेन तद्वाच्यार्थे आख्यातार्थव्यापारस्यान्वयः सम्भवतीति। परमिदमयुक्तम्। तेनैव प्रत्ययानां प्रकृत्यर्थान्वितस्वार्थबोधकत्वनियमस्य त्यागात्। यथा "चैत्रः पचति" इत्यत्र आख्यातार्थस्य सङ्ख्याभूतस्यान्वयः न प्रकृत्यर्थे पाके। अपि तु भिन्नपदोपात्तप्रातिपदिकार्थचैत्रेण सह । अतः प्रशब्दार्थः गमनमिति स्वीकारेऽपि तत्राख्यातार्थान्वयः सम्भवतीति न दोषः।

अपि च यदि सङ्ख्यान्यप्रत्ययार्थस्य प्रकृत्यर्थान्वितत्वनियमः इत्यङ्गीक्रियते तर्हि विनिगमनविरहरूपदोषात् अथवा वर्तमानत्वस्याख्यातार्थस्य आख्यातवाच्य एव यत्ने अन्वयस्वीकारात् त्वन्मतमयुक्तम् इति बोध्यम्। यतः त्वयैव सङ्ख्यान्यप्रत्ययार्थस्य वर्तमानस्य प्रकृत्यर्थान्वितत्वत्यागात् ।

अस्तु वाऽयं नियमः। तथापि गतेः प्रशब्दार्थत्वेऽपि न प्रत्ययार्थान्वयानुपपत्तिः। उपसर्गार्थोऽपि प्रकृत्यर्थ एवेति तत्राख्यातार्थस्यान्वयः सम्भवति। तदित्थम् – प्रत्ययार्थान्वये प्रयोजकं प्रकृत्यर्थत्वं किं रूपम्? किं प्रकृतिजन्यधीविषयत्वमुत प्रकृतिवृत्तिविषयत्वम्? आद्ये 'घटमानय' इत्यादौ आकाशस्य कर्मत्वान्वयप्रसङ्गः। यतः प्रकृतिभूतःशब्दः घटशब्दः । स च तन्मते जन्यः इति एकसम्बन्धिज्ञानमपर- सम्बन्धिस्मारकम् इति रीत्या स्वजनकस्याकाशस्य प्रतीतेः, तद्विषयत्वमाकाश इति घटशब्दार्थः आकाशोऽपि। तत्राम्पदार्थकर्मत्वान्वयः स्यादिति आकाशमानय इति बोधः स्यात्।

द्वितीये गम्भीरायां नद्यां मत्स्यः - इत्यत्र सप्तम्यर्थस्याधारत्वस्य गम्भीरनद्यामनन्वयापत्तिः। तदेवम् – अत्र वक्तुः विवक्षितः बोधः गम्भीराभिन्नानदी मत्स्याधारभूता इति। तथाच आधारत्वं न नदीमात्रे अपेक्षितम्, अपि तु तद्विशेषणविशिष्टे। परं प्रकृत्यर्थस्य प्रकृतिवृत्तिविषयत्वरूपप्रकृत्यर्थेन्वय-

स्वीकारात् नेदं सम्भवति। यतः नदीशब्दः प्रकृतिरूपः। तदर्थः नदीमात्रम्। न तु गाम्भीर्ययुक्तनदी। अतः तादृशार्थस्य नदीपदवृत्त्यविषयत्वेन तदर्थे आख्यातार्थान्वयो न स्यात्।

अथवा तन्मते पदानामन्विते शक्त्यस्वीकारात्। विशिष्टनदी न नदीपदेन लभ्यते। गाम्भीर्यवैशिष्ट्यस्य समभिव्याहारलभ्यत्वात्। तच्च अन्विताभिधानवादिभिरङ्गीकारात्– इति बोध्यम्। अस्मिन् पक्षे तु पूर्वकल्पोक्तः दोषः न। घटमानयेत्यत्र आकाशस्य घटरूपप्रकृतिवृत्त्यविषयत्वात्।

सिद्धान्तः – प्रत्ययार्थान्वये प्रयोजकीभूतं प्रकृत्यर्थत्वं नाम वृत्तिसहकारेण प्रकृतिप्रयोज्यधीविषयत्वमात्रम् । यथा घटपदवृत्तिसहकारेण घटपदप्रकृतिप्रयोज्यधीविषयत्वं घटमात्रे, न त्वाकाश इति नाकाशबोधः घटमानयेत्यत्र। एवं गम्भीरायां नद्यां मत्स्यः - इत्यत्र वृत्तिसहकारेण गम्भीरपदनदीपदवृत्तिद्वयसहकारेण नदीपदप्रकृतिप्रयोज्यधीविषयत्वं गम्भीरनद्याम् इति तस्यापि प्रकृत्यर्थत्वमस्तीति तत्राख्यातार्थस्य आधारत्वस्यान्वयः सम्भवति। अयं भावः। गम्भीरपदात् गम्भीररूपार्थः वृत्त्या लभ्यते। नदीपदेन च नदीरूपार्थः लभ्यते। एवं वृत्त्युपस्थितत्वादेव विशिष्टबोधः जायते। तत्र नदीपदप्रयोज्यत्वमस्त्येवेति बोध्यम्। एवञ्च बोधः गम्भीराभिन्ना नदी मत्स्याधारभूता इति। गम्भीराभिन्ननदीनिष्ठाधिकरणतानिरूपिताधेयतावान् मत्स्यः इति फलितार्थः।

प्रकृते प्रशब्दशक्तिसहकारेण ष्ठाधातुरूपप्रकृतिप्रयोज्यधीविषयत्वं गमनेऽस्तीति तदर्थे प्रकृत्यर्थे आख्यातार्थान्वयः सम्भवतीति प्रतिष्ठत इत्यत्र प्ररूपोपसर्गस्य वाचकत्वमस्त्येव । अत्र प्रयोजकत्वं च ष्ठाधातोरेवम् – धात्वभावे केवलमुपसर्गाप्रयोगात्, आख्यातस्य प्रयोगासम्भवाच्च, तत्प्रयोज्यधीविषयत्वम् इति बोधप्रयोजकत्वं तत्पदार्थस्य धातोः वर्तत इति बोध्यम्।

"एकस्यापि हि शब्दस्य गौणार्थस्वीकृतौ सताम्। महती जायते लज्जा" इतिवत् गौणार्थस्वीकारे एव महती लज्जा किमुतशब्दस्य निरर्थकत्वे इति अमुं पक्षमरोचयमानाः तर्कताण्डवकाराः पक्षान्तरम् उपस्थापयन्ति । तथाहि – अश्वकर्णादिशब्दे यथा वृक्षविशेषवाचकत्वं रूढत्वादित्यङ्गीक्रियते तथा प्रोत्त-रस्य ष्ठाधातोः गमने समुदायशक्त्यङ्गीकारात्, धातुवत् प्रशब्दोऽपि शक्त्याश्र-यकोटिनिविष्ट एव न तूपसन्दानम् (द्योतकम्)। अत्र च तदर्थे रूढत्वं मुख्यार्थधीद्वारा गत्यर्थप्रतीतेरभावेन शीघ्रमेव गच्छतीत्यादाविव गत्यर्थप्रतीते-रिति बोध्यम्। एतेन विरोधिलक्षणया प्रतिष्ठत इत्यत्र धातोः गमनोपस्थितिः, तात्पर्यग्राहकः प्रशब्दः इति मण्युक्तं निरस्तम् । मुख्यार्थधीविलम्बाभावात्। विरोधिलक्षणायाश्चोदाहरणम् – अयं पुण्यजनः इत्यादिरीत्या बोध्यम् । पु-ण्यजनशब्दश्च असुरार्थकः।

**केचन** प्रतिष्ठत इत्यत्र एवं वर्णयन्ति – प्रशब्दः निषेधार्थकः, धात्वर्थश्च गतिनिवृत्तिरूपः । निषेधे गतिनिवृत्तेः प्रतियोगितासम्बन्धेनान्वयः। एवं च प्रतिष्ठत इत्यस्माद्बोधः गतिनिवृत्तिनिषेधः इति, अर्थात् गच्छतीति भावः। न चास्मिन्पक्षे गतिनिवृत्तिनिषेधस्य प्रकृत्यर्थत्वं ष्ठाधात्वर्थत्वं नास्तीति कथं तत्राख्यातार्थान्वयः? इति शङ्क्यम्। गम्भीरायां नद्यां मत्स्यः - इत्यत्र प्रथमं गम्भीरनद्योरन्वयानन्तरं विशिष्टे एवार्थे यथा नद्युत्तरसप्तम्यर्थस्याधारत्वस्या-न्वयः, यथा वा तण्डुलान् "पचति" इत्यत्र तण्डुलविशिष्टपाके भावनान्वयः तथा प्रकृते प्रशब्दार्थधात्वर्थयोर्निषेधप्रतियोगिनोः अन्वयानन्तरं विशिष्टे गति-निवृत्तिनिषेधे भावनान्वयः सम्भवतीति नाख्यातार्थान्वयोपपत्तिः।

ननु तर्हि गतिनिवृत्तिनिषेधरूपत्वे तथैवोल्लेखः कुतो न क्रियते? इत्यत्रेदं बीजम् – प्रलयविरामविमलस्थित्यादिशब्देषु यथा तथा। तत्र हि प्रलय-

शब्दात् अभावमात्रं बोध्यते । एवं स्थित्यादिषु निवृत्तिमात्रम् । अपि च विमल इत्यादिषु शुद्धरूपोऽर्थः, न तु प्रतियोगिविशेषघटिताभावरूपोऽर्थः ।

परमयं पक्षोऽपि अनेकसंविधानसापेक्षः इति कुसृष्टिभूतः इति रूढपक्षस्यैव ऋजुत्वमस्तीति अरुचिर्बोध्या ।

एवमग्रे अस्मिन् प्रकरणे तर्कताण्डवे मण्युक्तलक्षणापक्षानुवादावसरेपि अयमर्थः वर्णितः । न चैवं प्रशब्दस्य गत्यर्थत्वे धात्वपेक्षा न स्यादिति शङ्क्यम् । शब्दसाधुत्वार्थमेव तदपेक्षणेन, अर्थबोधने तदपेक्षाभावस्योक्तत्वात् । तादृशस्यापि प्रकृत्यर्थत्वकथनेन आख्यातार्थान्वयस्यापि समुचितत्वादिति उपसर्गवाचकत्वसमर्थनप्रकरणे आख्यातसम्बन्धविचारः ।

## श्रीसत्यनाथतीर्थविरचिते अभिनवताण्डवे आख्यातार्थविचारः

अभिनवताण्डवे प्रकरणविभागः –

(१) आख्यातार्थनिरूपणम्

(२) उदयनोक्ताख्यातार्थनिरूपणभङ्गः

(३) भाट्टोक्ताख्यातार्थभङ्गः

(४) मण्युक्ताख्यातार्थभङ्गः

(५) शिरोमण्युक्ताख्यातार्थभङ्गः

(६) धात्वर्थनिरूपणम्

(७) मण्डनमिश्रोक्तधात्वर्थनिरूपणभङ्गः

(८) उपसर्गार्थनिरूपणम् – इति ।

अत्र अभिनवताण्डवे यथायथं प्रस्तुतान् विषयान् तदनुकूलतया द्वैतग्रन्थसम्बद्धान् विषयांश्च संयोज्य निरूपणं क्रियते ।

## अभिनवताण्डवे निरूपितमुदयनमतम्

आख्यातप्रत्ययस्य उदयनमते यत्नः अर्थः । तर्हि रथो गच्छति इत्यादिषु रथादीनां यत्नाभावेन आख्यातःप्रयोगः कथम्? इति प्रश्ने तत्र आख्यातस्य व्यापारे लक्षणा इति स्वीक्रियते । अथ च व्यापारे लक्षणा स्वीकारः आख्यातस्य तदैव युज्यते यदा आख्यातस्य यत्ने शक्तिः प्रमिता । अतः तत्र आख्यातस्य शक्तत्वे किं प्रमाणम्? इत्यस्येदमुत्तरम् – "पचति" इति प्रयोगानन्तरं 'पाकं करोति' इति विवरणेन यत्नार्थकत्वम् आख्यातस्य प्रमितम् । यत्नार्थककृधातुना "पचति" इत्यत्र आख्यातस्य विवरणात् । अत्र कारणम् – असति बाधके यथा वृद्धव्यवहारस्य व्युत्पत्तिहेतुत्वम् तथा असति बाधके विवरणस्यापि व्युत्पत्तिहेतुत्वम् । किञ्च किं करोति सः? इति प्रश्ने प्रतिवक्तारो भवन्ति "सः पचति" इति । एवं प्रतिवचनं च आख्यातस्य यत्नवाचित्वे एव सङ्गच्छते । अन्यथा किमनुकूलवान्? इत्यभिप्रायेण पृष्टस्य प्रश्नस्य "पचति" इत्युत्तरं न युज्येत । यत्नार्थकत्वे तु आख्यातस्य पाकानुकूलयत्नप्रतिपादकत्वात् "पचति" इत्यस्य उत्तरत्वं घटते ।

घटाङ्कुरयोः क्रियाजन्यत्वाविशेषेऽपि कृताकृतव्यवहारः यत्नजन्यत्वाजन्यत्वाभ्यामेव वैलक्षण्यं सम्भवतीति कृञः यत्नार्थकत्वम् । किञ्च यत्नार्थकत्वाभावे कृञः कर्तृपदस्य क्रियाश्रयमात्रार्थकत्वेन करणादिकारकान्तरेपि कर्तृपदप्रयोगः स्यात् । ततश्च करोतिना इव पचति, पक्ष्यति इत्यादिस्थलेषु सर्वाख्यातविवरणात् कृञो यत्नार्थकत्वम् – इति ।

## अभिनवताण्डवे उदयनमतभङ्गः

प्रतीतिरेव शब्दस्य यत्किञ्चिदर्थशक्तत्वे प्रमाणम् । 'संविदेव हि भगवती विषयसत्वोपगमे नः शरणम्' इत्यनुसरणात् । प्रयोगपरिशीलने च सर्वत्र आख्यातेन यत्नप्रतीतिः नैव जायते । तथाहि – "देवदत्तो यज्ञदत्तं जानाति, देवदत्तस्तिष्ठति" इत्यादौ ज्ञानानुकूलयत्नस्य स्थित्यनुकूलयत्नस्य वा देवदत्तयोः अप्रतीयमानत्वात् ।

अतः पूर्वोक्तप्रयोगेषु आख्यातस्य अमुख्यार्थत्वं स्वीकृत्य, निरूढलक्षणया आश्रयत्वपर्यन्तमर्थः वाच्यः । एवञ्च यज्ञदत्तविषयकज्ञानाश्रयः देवदत्तः इति बोधः, स्थित्याश्रयो देवदत्तः इति च बोधः वर्णनीयः । यद्यपि अयं बोधः अबाधित एव । अथाप्येतेषु प्रयोगेषु विनैव मुख्यार्थानुपपत्तिसन्धानं ज्ञानाश्रयत्वादि प्रतीतेः अमुख्यार्थत्वमाख्यातस्य स्वीकर्तुं न शक्यते ।

अपि च रथो गच्छतीत्यादिस्थलेषु आख्यातस्य व्यापारे लक्षणास्वीकारे विकल्पासहत्वम् । तथाहि – "रथो गच्छती"त्यादौ आख्यातवशात् गमनरूपव्यापाराश्रयः रथः इति बोधः जायते उत गमनानुकूलव्यापाराश्रयो रथः इति । नाद्यः । यदि आख्यातेन गमनरूपः व्यापारः लक्ष्यते तस्य गम्लृधातुनैव अवगतत्वेन न पुनस्तत्प्रतिपत्त्यर्थं लक्षणायाः अनावश्यकत्वात् तस्याः वैय्यर्थ्यम् । नापि द्वितीयः । रथे यथा प्रयत्नाभावः तथा गमनानुकूलव्यापारोऽपि । न च गमनानुकूलः व्यापारः अस्ति स च परिस्पन्दरूपः इति वाच्यम् । एवं सति रथो गच्छतीत्यादिप्रयोगेषु अनुपपत्त्यभावेऽपि रथः परिस्पन्दतेत्यादि प्रयोगेषु अनुपपत्तिर्दुर्वारा । तत्राप्येवं विकल्पकरणात् । तथाहि – किं रथनिष्ठः परिस्पन्दरूपव्यापार एव आख्यातेन लक्ष्यः उत परिस्पन्दानुकूलोऽन्यः । नाद्यः । धातुनैव तस्यावगतत्वेन लक्षणा वैय्यर्थ्यात् । नापि

द्वितीयः – परिस्पन्दानुकूलव्यापाराभावात् प्रयत्नवत् । अथ च तादृशोऽपि व्यापारः कश्चन वर्तते यः परिस्पन्दानुकूलः इत्यङ्गीक्रियते । तर्हि तस्याप्येवमिति तस्याप्येवमिति अनवस्था दुष्परिहरा ।

अपि च परिस्पन्दतेत्यत्र यः धातोरर्थः स एव प्रत्ययस्यापीति आपतितम् । उभयोरपि व्यापारवाचकत्वात् । एवं सति यक् प्रत्ययापत्तिः 'सार्वधातुके यक्' इति सूत्रेण सार्वधातुकप्रत्यये परे भावकर्मवाचिनि यक्विधानात् । प्रकृते अस्ति भावार्थकत्वम् (व्यापारार्थकत्वमिति यावत्, व्यापारश्च धात्वर्थः) । एवञ्च शप्प्रत्ययाभावप्रसङ्गोऽपि । 'कर्तरि शप्' इत्यनेन कर्तरि सार्वधातुके परे एव शब्विधानात् । अत्र तादृशार्थकत्वाभावात् ।

अपि च विवरणात् न आख्यातस्य यत्नार्थकत्वं सिद्ध्यति । यतः 'पाकं करोति' इति कृधातुना क्रियाश्रयत्वस्यैवाभिधानात् । तत्र कारणम् –'पाकं करोति' इति प्रयोगः पाकानुकूलव्यापारं दृष्ट्वैव, न त्वन्यथा (कृतिश्च दर्शनायोग्या इति यावत्) ।

किञ्च प्रश्नप्रतिवचनान्यथानुपपत्त्या आख्यातस्य यत्नार्थकत्वे इदमुत्तरम् – किं करोतीति प्रश्नः किंविध क्रियाश्रयः इत्यर्थकः । तस्य च पाकानुकूलव्यापाराश्रयः इत्यर्थक एव 'पाकं करोति' इत्युत्तरम्, न त्वन्यथा । अत एवेदं सङ्गतम् – किं करोति पश्य? इति वदन्ति जनाः । यदि यत्नस्याख्यातार्थत्वं तस्य दर्शनकर्मत्वं न घटते, परात्मसमवेतत्वेन तस्यातीन्द्रियत्वात् सुखादिवत् । व्यापारस्य तु दर्शनकर्मत्वं घटते । शरीरनिष्ठत्वात् चलनादिवत् इति बोध्यम् ।

अथ च यत्नजन्यत्वाजन्यत्वाभ्यामेव कृताकृतव्यवहारः इति न युक्तः । तथा सति यत्नाभावेऽपि कृतत्वव्यवहारदर्शनेन व्यभिचारात् । उदाहरणम् – बीजेनाङ्कुरः कृतः, स्रगादिना सुखं कृतम् इत्यादि । नापि कर्तृपदं कृत्याश्र-

याभिधायकमिति स्वीकारे कारकान्तरे प्रयोगातिप्रसङ्गः । तादृशेऽर्थे तस्य शब्दस्य रूढिस्वीकारेणैव अन्यत्राप्रयोगाकरणादिति ।

## अभिनवताण्डवे मणिकारमतानुवादः

"चैत्रः पचति" इत्यादिषु आख्यातस्य यत्नार्थकत्वे अनुभव एव प्रमाणं लाघवात् । न तु पाकानुकूलो व्यापारः आख्यातस्य अर्थः । यतः आख्यातार्थव्यापारवृत्तिव्यापारत्वस्योपाधित्वेन यत्नत्वापेक्षया गुरुत्वात् । न च व्यापारत्वस्य यत्नत्वापेक्षया गुरुत्वेऽपि अचेतनेप्याख्यातस्य मुख्यार्थत्वसङ्गमनाय अनुगतो व्यापार एव आख्यातशक्यः । मुख्यार्थे व्यापारे सम्भवति तत्त्यागायोगादिति वाच्यम् । शक्तिग्राहकेन वृद्धव्यवहारादिना प्रमाणेन लघुभूते वस्तुन्येव शक्तिस्वीकारात् । अतः यत्ने एव आख्यातशक्तिः । न च रथो गच्छतीत्यादिषु स्थलेषु व्यापरस्यैव अवगम इति व्यापारस्यैव आख्यातशक्यत्वम् इति वाच्यम्, अन्यथासिद्धत्वात् । अर्थात् आख्यातस्य व्यापारे गौणतया स्वीकारात् अथवा शक्तिभ्रमेण तत्राख्यातात् व्यापारस्य बुद्ध्यारोहात् । अपि च यत्नविगमदशायां तज्जन्यव्यापारकाले "पचति" इत्यत्र वर्तमानव्यापाराभिधानम् आख्यातेन लक्षणया रथो गच्छतीत्यत्र इव वक्ष्यमाणत्वात् न तत्रापि दोषः । तस्मात् लडाख्यातं यत्नवाचकम् आख्यातत्वात् लिङाख्यातवत् । पचति पक्ष्यति अपाक्षीत् इत्यादौ वर्तमानागतातीतयत्नप्रतीतेश्च यत्न एवाख्यातवाच्यः । तेन आख्यातेन यत्नस्य वर्तमानत्वादिकं न त्वन्येन असम्भवात् – इति ।

## अभिनवताण्डवे मणिकारमतभङ्गः

"चैत्रः पचति" इत्यत्र अयमनुभवः सार्वजनीनः – चैत्रः पाकानुकूलव्यापारवान् इति । अतः अनुभवानुरोधेन आख्यातप्रत्ययस्य यत्ने शक्तिः इति

वक्तुं न शक्यते, अपि तु व्यापारे एव । न च अनुभवकलहः न दोषाय इति अस्ति नियमः इति वाच्यम् । अस्तु तथापि दोषान्तरम् । तथाहि – "पचति" इत्यत्र नाख्यातस्य यत्ने शक्तत्वम्, विकल्पासहत्वात् । तथाहि – किमाख्यातेन यत्नस्य यत्नत्वेन प्रतीतिः उत व्यापारत्वेन यत्नस्य प्रतीतिः? आद्ये लाघवादिति हेतूपन्यासः व्यर्थः । आख्यातेन यत्नत्वेन यत्नप्रतीत्या व्यापारत्वस्य आख्यातपदशक्यतावच्छेदकत्वम् अर्थात् प्रवृत्तिनिमित्तत्वमप्रस्तुतम् । द्वितीये च पुनः लाघवोपन्यासस्य वैयर्थ्यम् । यतः यत्नस्य व्यापारत्वेन प्रतीत्या व्यापारत्वं यत्ने शक्यतावच्छेदकतया अभ्युपगतमेवेति कथं तद्वारणाय हेतूपन्यासः स्यात्, स्वविरोधापत्तेः । अपि च नैवं नियमः शङ्क्यः? येन शब्देन यत् न प्रतीयते तत् लघुभूतं शक्यतावच्छेदकमिति । यथा प्रकृते आख्यातेन अप्रतीतस्य लघुभूतस्य यत्नत्वस्य शक्यतावच्छेदकत्वम् इति । तथा कुत्राप्यदर्शनात् ।

किञ्च आख्यातस्य यत्नार्थकत्वे "पचति" इत्यत्र 'कर्तरि शप्' इत्यनेन शप्प्रत्ययो न स्यात् । कर्तरि सार्वधातुके परे एव तद्विधानात् । अथ च आख्यातेन कर्तुरनभिधानात् अनभिहिते कर्तृकरणयोस्तृतीया इति सूत्रबलात् देवदत्तः "पचति" इत्यादिषु देवदत्तपदात् तृतीया स्यात्, न तु प्रथमा । पच्यते इत्यत्रापि यक् न स्यात् । आख्यातप्रत्ययस्य यत्नार्थकत्वात् । तण्डुल इत्यत्र च प्रथमा न स्यात् । कर्मणः आख्यातेन अनभिधानात् द्वितीयाप्रसक्तेः । न च कर्तृकरणयोस्तृतीया इत्यादि सूत्राणामयमर्थः कर्तृगतसङ्ख्यायाम् अनभिहितायां तृतीया इति । अतः पच्यते "पचति" इत्यादिषु आख्यातस्य यत्नार्थकत्वेऽपि कर्तृकर्मादिगतसङ्ख्याभिधानात् तृतीयादयो न भवन्ति, शबादयः भवन्ति च इति वाच्यम् । आख्यातस्य देवदत्तगतसङ्ख्याभिधायकत्वायोगात् । कारणं च देवदत्तपदवाच्यस्य सुप्विभक्तिबोध्यसङ्ख्यावरुद्धत्वम् ।

न च अयं दोषः । यथा नीलमुत्पलमित्यत्र नीलपदोत्तरविभक्तेः उत्पलशब्दार्थसमवेतसङ्ख्याभिधायकत्वं वर्तते । न तत्र अन्यबोध्यसङ्ख्यावरुद्धत्वम्, अपि तु अन्यस्य अन्यनिष्ठसङ्ख्याबोधकत्वमिति वाच्यम्, वैषम्यात् । तत्र नीलपदोत्तरा विभक्तिः सा नीलपदार्थगतसङ्ख्याबोधिकाऽपि । न च प्रकृते आख्यातप्रत्ययस्तथा । न च नीलपदोत्तरविभक्तेः उत्पलपदोत्तरविभक्तेश्च सङ्ख्यार्थकत्वे सङ्ख्याद्वयप्रसङ्गः । "विशिष्टयोः परस्परमभेदबोधे विशेषणयोरपि तथात्वम्" इत्यनुसारेण विशिष्टयोः नामार्थयोः नीलोत्पलयोः अभेदे तद्विशेषणीभूतयोः सङ्ख्ययोरपि अभेदात् । यदपि अनुमानं पूर्वपक्षिणा प्रस्तुतम्, तत् साध्यवैकल्योपेतम् । दृष्टान्ते लिङाख्याते व्यापारवाचकत्वस्यैव सत्वात् ।

आक्षेपः – भवतु कर्तरिस्थले यथाकथञ्चित् समाधानम्। परं कर्मणि स्थले चैत्रेण पच्यते तण्डुलः इत्यादिषु तण्डुलादि कर्म । तत्र कर्मलक्षणं क्रियाजन्यफलाश्रयत्वरूपं यत् विद्यते तच्च आख्यातवाच्यमेव । यतः कर्तरिस्थले एव तण्डुलं "पचति" इत्यादिषु यथा कर्मत्वं द्वितीया लभ्यम्, अत्र तु द्वितीयाभावेन तेन उक्तमिति वक्तुं न शक्यते। तस्मात् आख्यातवाच्यं कर्मत्वमेव, न तद्धर्मिभूतं कर्म, तस्य अन्यतयैव लाभात्।

समाधानम् – धर्मिणः अनुक्तौ कथं प्रतीतस्य धर्मस्यान्वयः? इति स्वीकारेण प्रकृत्या प्रत्ययेन वा धर्मिणः अनुक्तत्वदशायां प्रत्ययार्थस्य कर्मत्वस्य अनन्वयप्रसङ्गः। अतः न कर्मत्वम् आख्यातवाच्यम्।

किञ्च पच्यते तण्डुलः इत्यत्र सामान्यतोऽपि यदि कर्मानभिधानं तदा किं कर्म इत्याकाक्षाभावप्रसङ्गः। अपि तु कुत्र कर्मत्वम्? इति आकाङ्क्षा स्यात् इत्यापत्तिः ।

* * * * *

## अभिनवताण्डवे भाट्टमतानुवादः

भाट्टमते आख्यातस्य धात्वर्थानुकूलः व्यापारः अर्थः । तस्य चेतनाचेतनसाधारण्येन "चैत्रः पचति, रथो गच्छति" इत्यादिषु विद्यमानत्वात् । अतः रथो गच्छतीत्याद्यचेतनकर्तृकस्थलेऽपि आख्यातस्य मुख्यत्वम् । न च धात्वर्थानुकूलव्यापारस्य आख्यातवाच्यत्वे श्रमशयानेपि "पचति" इति प्रयोगः स्यात्, शयनस्य श्रमशान्तिद्वारा पाकानुकूलत्वात् इति वाच्यम् । व्यापारविशेषस्यैव आख्यातवाच्यत्वेन विवक्षितत्वात् । तर्हि "पचति" इत्यत्र पाकानुकूलयत्नप्रतीतिः कथमित्यत्रेदमुत्तरम् –आक्षेपबलेन तल्लाभात् । अर्थात् धात्वर्थविशेषेण पच्धात्वर्थेन आक्षेप्तुं शक्यत्वादिति । अथापि "पचति" इत्यस्य 'पाकं करोति' इति विवरणात् यत्न एवाख्यातार्थः इति वाच्यम् । तदुत्तरं विवरणेन शक्तमेव विव्रियत इति नियमाभावात् आक्षेपलब्धस्यापि यत्नस्य विवरणसम्भवात्, नाख्यातस्य यत्नार्थकत्वेऽदं प्रमाणम् ।

## अभिनवताण्डवे भाट्टमतखण्डनम्

'लः कर्मणि च भावे च अकर्मकेभ्यः' इत्यनुशासनेन आख्यातप्रत्ययस्य कर्तृकर्मवाचकत्वं स्पष्टं प्रतिपादितम् । अतः तद्विरोधात् नाख्यातस्य तदनुकूलव्यापारोऽर्थः ।

अपि च "रथो गच्छती"त्यादिस्थलेषु धात्वर्थानुकूलव्यापारः नास्ति । यदि स्यात् तदा तत्प्रतिपादनेन आख्यातस्य मुख्यार्थत्वं स्यात् ।

किञ्च सर्वत्राख्यातस्य तदनुकूलव्यापारार्थकत्वे घटो जायत इत्यत्र घटे उत्पत्त्यनुकूलव्यापाराभावेन जायत इति आख्यातप्रयोगो न स्यात्। यतः नैतावत्पर्यन्तं घटः उत्पन्नः । अत एव अनुत्पन्नस्य घटस्य उत्पत्त्यनुकूल-

व्यापाराभावोपि । न च "घटो जायते" इत्ययं प्रयोगः गौणः इति वाच्यम् । तुल्यन्यायेन रथो गच्छतीत्यादेरपि गौणतापत्तेः ।

किञ्च आख्यातप्रत्ययस्य नानार्थवाचकत्वम् अनभ्युपगम्य सर्वत्र तदनुकूलव्यापारस्यैव वाचकत्वे "पचति" इत्यादिषु 'कर्तरि शप्' इत्यनेन शबभावः पच्यत इत्यादिषु यगभावश्च स्यात् । अतः सर्वत्र एकमेव रूपमापद्येत । एवमेव देवदत्तः इत्यत्र तृतीया स्यात् न तु प्रथमा । आख्यातेन कर्तुरनभिधानादिति ।

## अभिनवताण्डवे मण्डनमिश्रमतानुवादः

अस्मिन् मते धात्वर्थः फलमेव । तथाहि – पच्धात्वर्थः विक्लित्तिः, न तु विक्लित्तिफलकः अधःसन्तपनादिव्यापारः। एवमर्थस्वीकारे लाघवमेव बीजम्। एवं गम्लृधातोः उत्तरसंयोगः अर्थः । पत्लृधातोः अधःसंयोगः अर्थः । त्यज्धातोः विभागः अर्थः । हन्धातोः मरणमर्थः । यज्धातोः स्वत्वध्वंसः अर्थः । हूधातोः प्रक्षेपः अर्थः । दाधातोः स्वत्वध्वंसः परस्वत्वं च अर्थः । न तु यथाक्रमं तदनुकूलव्यापारः अर्थः । अधःसंयोगानुकूलव्यापारोऽर्थः । विभागानुकूलस्पन्दोऽर्थः । तत्फलकः खड्गघातादिव्यापारोऽर्थः । देवतोद्देशत्यागः । प्रक्षेपानुकूलत्यागः । स्वत्वध्वंसपरस्वत्वापादनानुकूलत्यागः गौरवात्

न च व्यापारविगमे फलदशायां पचति गच्छति ददातीत्यादिप्रयोगः कथं वार्यते? न ह्यपाक्षीदित्यादिव्यापारकाले च "पचति" इत्यादि प्रयोगो न स्यात् इति च कथं वार्यते? इति वाच्यम् । अन्यथासम्भवात् । तथाहि – आख्यातार्थत्वेन धात्वर्थानुकूलव्यापारवर्तमानत्वादेः स्वीकारे व्यापारकाले "पचति" इत्यादिप्रयोगो भवति नान्यथा । न च फलस्य धात्वर्थत्वे तण्डुलादेः क्रियाजन्यफलशालित्वाभावेन कर्मत्वं न स्यादिति वाच्यम् । अन्यथाऽप्युपपत्तेः ।

कर्मत्वं हि न क्रियाजन्यफलशालित्वम् । अपि तु परसमवेतव्यापारफलशालित्वम् । स च परसमवेतव्यापारः धात्वर्थः आख्यातार्थो वा इति उभयथापि तण्डुलादेः कर्मत्वं सम्भवतीति फलमेव धात्वर्थः ।

## अभिनवताण्डवे मण्डनमिश्रमतभङ्गः

सः स्थूलदृश्वा । तथाहि – यदि सर्वत्र फलमेव धात्वर्थः, तर्हि पचिगम्यादीनां धातूनाम् अकर्मकत्वं स्यात् । विक्लित्तिसंयोगादीनामकर्मकत्वात् । न चेदमिष्टापादनं तन्मते भवितुमर्हति । पच्यते गम्यत इत्यादिप्रयोगाभावप्रसङ्गात् । अनुशासने च स्पष्टम् 'लः कर्मणि च भावे चाकर्मकेभ्यः' इत्यत्र सकर्मकेभ्य एव धातुभ्यः कर्मणि लकारः न तु अकर्मकेभ्यः इति उक्तत्वात् । यदपि पच्यर्थो विक्लित्त्यादिरिति तन्न युज्यते । फलं पक्वम् इत्यादिषु पक्वशब्देन विक्लित्तेः पचिकर्मतायाः, ग्रामः गम्यः इत्यादिषु ग्रामस्य गतिकर्मतायाः, त्यक्तं निषिद्धमित्यादिषु निषिद्धस्य त्यजिकर्मतायाः, देवदत्तो हतः इत्यादिषु देवदत्तस्य हननकर्मतायाः प्रतीयमानत्वेन विक्लित्त्यादेः पच्यादिधात्वर्थजन्यफलत्वेन धात्वर्थरूपत्वायोगात् । जन्यजनकयोरभेदाभावादिति यावत् । अन्यथा तद्व्यापारजन्यफलशालिन एव तत्कर्मत्वेन तण्डुलादेः पच्यादिकर्मत्वाभावापातात् । अपि च कर्मत्वं न परसमवेतव्यापारफलशालित्वं भवितुं युक्तम् । पूर्वोक्तविधया तण्डुलस्य कर्मत्वमात्रव्युत्पादनेऽपि पचिकर्मत्वाव्युत्पादनात् इति ।

## अभिनवताण्डवे शिरोमणिमतानुवादः

आख्यातस्य यत्ने शक्तिः । "पचति" इत्यस्य 'पाकं करोति' इति यत्नार्थककरोतिना विवरणवत् सर्वत्र गच्छतीत्यादिष्वपि तथैव विवरणात् । असति बाधके यथा व्यवहारस्य शक्तिग्राहकत्वं तथा विवरणस्यापि ।

किञ्च किं करोतीति यत्नप्रश्नस्य "पचति" इत्युत्तरस्य यत्नार्थकत्वं विनानुपपत्तिः । एवं यदि रथो गच्छतीत्यादिषु गमनानुकूलव्यापारः अर्थः आख्यातस्य, तदा रथगमनानुकूलव्यापारः रथनेतरि अस्तीति तस्मिन्नपि गच्छतीति प्रयोगापत्तिः । न च क्रियते अतः न व्यापारार्थकत्वम् । एवमेव गच्छति, जानाति, इच्छति, यतते, द्वेष्टि, विद्यते, निद्राति इत्यादौ धात्वर्थानुकूलव्यापारस्य अप्रतीयमानत्वेन सर्वत्र गत्याद्याश्रयत्वे निरूढलक्षणा । आश्रयत्वं च धात्वर्थेनान्वेति । एवञ्च जानाति, गच्छतीत्यादेः ज्ञानाद्याश्रयत्वमर्थः । नश्यतीत्यत्र आख्यातस्य प्रतियोगित्वे निरूढलक्षणा । अत एव नश्यतीत्यस्य नाशप्रतियोगीत्यर्थः वर्ण्यते । न च कृञः यत्नाभिधायकत्वमेव कथम्? येन करोतिना सर्वाख्यातविवरणेन आख्यातस्य यत्नार्थकत्वं सिषाधयिषितम् ।

**तत्रोच्यते** – व्यवहारान्यथानुपपत्तिरेव अत्र प्रमाणम् । अतिप्रसङ्गवारणञ्च । तथाहि – पटाङ्कुरयोः जन्यत्वाविशेषेऽपि कृताकृतव्यवहारः क्रियते । अत्र कारणम् – न क्रियाजन्यत्वाजन्यत्वम्, उभयोरपि क्रियाजन्यत्वात् । विद्येते च यत्नजन्यत्वाजन्यत्वमिति । तत्प्रयुक्तेवायं कृताकृतव्यवहारः - इति कृतादिशब्दे प्रयोगेषु कृञो यत्नवाचित्वं क्लृप्तम् । अपि च अतिप्रसङ्गः । आश्रयमात्रार्थकत्वे कर्तृपदस्य कारकमात्रे तत्प्रयोगः स्यात् । अतः आश्रयपरतृजन्तज्ञात्रादिपदवत् कर्तृपदस्यापि कृत्याश्रयबोधकत्वेन अस्ति कृञः यत्नवाचकत्वम् - इति ।

## अभिनवताण्डवे शिरोमणिमतभङ्गः

आख्यातस्य कृतिवाचित्वं नाङ्गीकारार्हम् । कारणं प्रश्नप्रतिवचनान्यथानुपपत्तिः, विवरणं च । तथाहि – किमयं घटं करोति उत घटोत्पत्तये

यतते? इति प्रश्ने प्रतिवचनं भवति 'घटं करोत्येव' इति । अतो ज्ञायते न यत्नार्थकत्वम् आख्यातस्य । तथा करोतेः कृतिवाचित्वाभावेन यत्र करोतिना विवरणं, तेनापि नाख्यातस्य यत्नार्थकत्वम् । किञ्च यदि करोतेः यत्नार्थकत्वं तदा रथो गच्छतीत्यत्र आख्यातस्य विवरणं करोतिना न स्यात् । यथा अग्निर्माणवकः इति गौणप्रयोगस्य विवरणम् अग्निसदृशः इति युक्तम् । न तु माणवको वह्निः - इति । तथा प्रकृतेऽपि रथो गच्छतीत्यत्र रथः गमनं करोति इति विवरणं न युक्तम् । अपि च करोतेराख्यातस्य च यत्नार्थकत्वे करोतीति प्रयोगः नोपपद्यते । आख्यातस्य भाववाचित्वेन आत्मनेपदेन यकाच भाव्यत्वात् कुरुतः कुर्वन्ति इति द्विवचनबहुवचने न स्याताम् । सकर्मकत्वं च न स्यात् । भावे लकारविधानस्य अकर्मकादेवेत्युक्तत्वात् । न च करोतीत्यत्र नाख्यातस्य यत्नार्थकत्वम् अपि तु कर्तृगतसङ्ख्यावाचकत्वमिति वाच्यम् । अथापि कर्तुं यतत इति प्रयोगेण कृञः यत्नार्थकत्वं नास्ति । यदि तत्संरक्षणाय आख्यातस्य प्रयोगसाधुत्वमङ्गीक्रियते तदा अङ्गीकारः न शक्यः । विनैव बलवत्प्रमाणेन प्रयोगसाधुत्वाङ्गीकारायोगात् । अपि च सङ्ख्यायाः अनन्वयप्रसङ्गः । आख्यातोक्तसङ्ख्यायाः भावनाविशेष्ये कर्तरि अन्वयस्य त्वया अङ्गीकारायोगात् । किञ्च "पचति" इत्यत्र आख्यातस्य कर्तृवाचित्वाभावे देवदत्तेनेति तृतीयाप्रसङ्गः । पच्यत इत्यत्र आख्यातस्य कर्मवाचकत्वाभावे तण्डुलपदे द्वितीयायां तण्डुलमिति प्रयोगापत्तिः । आख्यातेन कर्तृकर्मणोरनभिधानात् । न च पचति पच्यत इत्यादिषु कर्तृकर्मणोरनभिधानेपि तद्गतसङ्ख्याभिधानेन नातिप्रसङ्गः इति वाच्यम् । "देवदत्तः ओदनं पचति" इत्यत्र आख्यातेन कर्तृगतसङ्ख्यैव उक्ता न तु कर्मगतसङ्ख्या इत्यत्र विनिगमनाविरहात् ।

अत्र परिहारं वदन्तः केचन एवमाहुः – आख्याताभिहितसङ्ख्यायाः

भावनाविशेष्ये अन्वयः । उभयोरपि कर्तृसङ्ख्ययोः आख्यातोक्तत्वात् । यथा "देवदत्तः पचति" इत्यत्र भावनाविशेष्यः देवदत्तः, एवम्बोधात् – तण्डुलनिष्ठा या विक्लित्तिः तदनुकूलो यो पाकः तद्विषयिका या भावना तदाश्रयो देवदत्तः इति । अतः "पचति" इत्यत्र आख्याताभिहितएकत्वसङ्ख्या भावनाविशेष्ये देवदत्ते आश्रयतासम्बन्धेनान्वेति । एवं पच्यते इति स्थले भावनाविशेष्यः तण्डुलः तथा प्रतीतेः । मैत्रनिष्ठा या भावना तद्विषयः यः पाकः तज्जन्यं यत्फलं, तच्छाली तण्डुलः इति । अतः आख्याताभिहितैकत्वसङ्ख्या तण्डुले आश्रयतासम्बन्धेनान्वेतीति ।

इमं मतमरोचयमानाः असहमानाश्च **नव्याः** एवं प्रतिपादयन्ति – चैत्रेण पच्यते तण्डुलः इत्यत्र भावना आख्यातलभ्या । तृतीयाविभक्तेश्च आधेयत्वमर्थः । कृतिविषयपाकस्तु धातुना लभ्यः इति चैत्रनिष्ठा या भावना तद्विषयः पाकः इति बोधनिर्वाहेपि पाकजन्यं यत्फलं तच्छाली तण्डुलः इति कथं बोधः? फलप्रत्यायकाभावात् । न च 'पच्यत' इत्यत्र आत्मनेपदप्रत्ययार्थः फलमिति नेयमाशङ्का इति च युक्तम् । विकल्पासहत्वात् । तथाहि – किं भावनायाः फलेऽन्वयः? उत क्रियायाम्? नाद्यः । पाकविषयिणी या मैत्रनिष्ठा भावना तज्जन्यं यत्फलम्, तच्छाली तण्डुलः इत्येव शाब्दबोधे भानप्रसङ्गात् क्रियाजन्यत्वबोधाभावः । द्वितीये आख्यातोपस्थितभावनायां विशेषणत्वेनान्यत्र क्रियायाः अन्वयनियमः क्लृप्तः इति तद्भङ्गप्रसङ्गः । अतः मैत्रनिष्ठा या भावना तद्विषयो पाकः तज्जन्यं यत्फलम्, तच्छाली तण्डुलः इति बोधस्य उपपादनं कथम्? इत्यत्रेदमुत्तरम् – कर्तरिप्रयोगे भावना आख्यातोक्ता, कर्मणिप्रयोगे च न भावना आख्यातोक्ता, अपि तु कर्तृवाचकपदोत्तरतृतीयोक्ता । न च तस्य सुत्वेन कथं भावनावाचित्वमिति वाच्यम् । अन्यत्र सुत्ववतः षष्ठीविभक्तिरूपस्य तृतीयाविभक्तिरूपस्य च भावनाशक्तेः क्लृप्तत्वात् । यथा कृत्यनभिधाय-

कभावकृत्प्रत्यययोगे चैत्रस्य पाकः चैत्रेण पक्वास्तण्डुलाः इत्यत्र अन्यथा तत्र चैत्रपाकयोरन्वयबोधः न स्यात् । तदन्वयस्य भावनाद्वारकत्वात् । ततश्च चैत्रनिष्ठा या भावना तद्विषयः यः पाकः तज्जन्यं यत्फलम्, तच्छाली तण्डुलः इति बोधः उपपद्यते । सुबर्थभूतायाः भावनायाः क्रियायां विशेषणत्वेनैवान्वयस्य व्युत्पत्तिसिद्धत्वात् । ननु कर्मणिप्रयोगे यदि भावना न आख्यातोक्ता तर्हि आख्यातोक्तसङ्ख्यायाः कथं कर्मान्वयः? यतः सुप्प्रत्ययोक्तभावनायाः आख्याताभिहितसङ्ख्यायाश्च एकप्रत्ययोपात्तत्वाभावेन सुप्प्रत्ययोक्तभावनाविशेषे सङ्ख्यान्वयस्य अशक्यत्वात इत्युक्ते उत्तरम् – व्युत्पत्तिबलेनान्यथासिद्धेः । आख्यातोपस्थाप्यभावनाया इव तदुपस्थापितसङ्ख्यायाः अपि प्रथमान्तपदोपस्थाप्येनैवान्वयः इति ।

इदमपि नवीनोक्तं न समीचीनम् । तथाहि – पूर्वोक्तदोषाभावेऽपि कर्मणिप्रयोगे आख्यातेन सङ्ख्यामात्राभिधाने कर्मणि तण्डुलादौ द्वितीया आपद्यते । तण्डुलगतकर्मणः आख्यातेनानभिहितत्वात् । न चास्ति नियमः - फलाभिधाने आख्यातेन न तण्डुलपदात् द्वितीया, फलानभिधाने च द्वितीया इति वाच्यम् । 'कर्मणि द्वितीया' इत्याद्यनुशासनविरुद्धत्वात् नेदं सम्यक् । अपि च तण्डुलशब्दे प्रथमाविभक्तेरयोगात् आख्याताभिहितसङ्ख्यान्वयस्य वैधुर्यापातात् । प्रथमान्तपदाभावादिति भावः । इति शिरोमण्युक्तं तदुपरिप्रतिपादितं तदनुसारिमतं च अयुक्तम् ।

## कोऽयं पच्याद्यर्थः?

विशिष्य आख्यातवादे पचति, जानाति, इच्छति, यतते इत्यादयः प्रयोगाः परामृष्टाः । तत्राख्यातार्थनिरूपणसन्दर्भे धात्वर्थोऽपि प्राधान्यमावहति । तदधिकृत्य अभिनवताण्डवे निरूपितः । तथाहि – प्रायः क्रिया

धात्वर्थः । 'भूवादयो धातवः' इति सूत्रेण धातुत्वं च इदमिति लभ्यते । भ्वादिगणपठितत्वे सति क्रियावाचकत्वं धातुत्वमिति । इदं च प्रायिकम् । **क्वचित् क्रियावाचकत्वाभावेऽपि धातुत्वं दृश्यते । यथा गडि वदनैकदेशे इति धातुव्याख्यानात् क्वचिद् द्रव्यार्थकत्वमपि । अत एव 'बृह जातिजीवकमलासनशब्दराशिषु' इत्यादिधातुपाठः सङ्गतः** । अन्यथा क्रियावाचकत्वाभावेन तस्यायुक्तत्वम् । प्रकृते पचेः सन्तपनविशेषः अर्थः, गमेः ग्रामादिप्राप्तिसाधनीभूता चलनात्मिका क्रिया, पतेः अधःसंयोगहेतुभूताचलनात्मिका क्रिया, हन्तेः मरणानुकूलखड्गादिघातरूपः व्यापरोर्थः, यजेस्तु मन्त्रपूर्वकः देवतोद्देश्यकः मानसस्त्यागः, जुहोतेस्तु देवतोद्देश्येन मनसा त्यक्तस्य हविषः अग्नौ प्रक्षेपः अर्थः, ददातेस्तु द्रव्यस्य परस्वत्वापादनहेतुभूता क्रिया, रजकाय वस्त्रं ददाति, खण्डिकोपाध्यायः (अथर्वणसम्बन्धिखण्डिकानाम् अध्यापकः) चपेटिकां छात्राय ददाति इत्यादयश्च प्रयोगाः गौणाः । परस्वत्वापादनाभावात् ।

जानाति, इच्छति, यतते, विद्यते, तिष्ठतीत्यादौ ज्ञानेच्छाप्रयत्नसत्तागतिनिवृत्तिरेव धात्वर्थः । ज्ञा अवबोधने, इष इच्छायाम्, यती प्रयत्ने, विद सत्तायाम्, ष्ठा गतिनिवृत्तौ इति धातुव्याख्यानात् । प्रयोगवशात् अनेकार्थाः अपि धातवः प्रत्येतव्याः । गत्याद्यर्थानां ज्ञानाद्यर्थत्वदर्शनात् । ये ये गत्यर्थकाः ते ते ज्ञानार्थकाः इति च प्रसिद्धम् । **यथा सन्नयाम् अधिकरणप्रतियोगिभ्यामभावो निरूप्यत इति नियमः वर्तते । अत्र सन्नयामिति पदस्य अर्थः ज्ञाताभ्यामिति । अस्य ज्ञानार्थकत्वं च धातुना लब्धम् । धातुश्च षद्लृधातुः, तदर्थः विशरणगत्यवसादनानि । अत्र गतिरूपार्थनिर्देशेन ज्ञानार्थकत्वं स्वीकृतम्** । अपि चान्यत् – धातुपाठे पाणिनिना केवलं दिक्प्रदर्शनं कृतम् । प्रयोगतः अनेकार्थाः अनुगन्तव्याः । उक्तं च –

**क्रियावाचित्वमाख्यातुं एकैकोर्थः प्रदर्श्यते ।**
**प्रयोगतोऽनुगन्तव्याः अनेकार्थाः हि धातवः ॥**

**अत्र सूत्रमपि प्रमाणम् – यथा 'परौ भुवोऽवज्ञाने' इत्यत्र अवज्ञाने इतिपदम्,** अन्यथा भू सत्तायाम् इत्येव धातुपाठे सति कथमवज्ञानार्थकत्वम्? अथवा भू शुद्धिचिन्तयोः इत्येव धातुपाठात् कथमवज्ञानार्थकत्वम्? एवं 'सम्भवे व्यभिचारे च स्याद्विशेषणमर्थवत्' इति रीत्या सम्भवस्यैवाभावे अस्य विशेषणस्य असार्थक्यम् । अतः ज्ञायते अयमप्यर्थः भूधातोः । एवमवज्ञाने इति निर्देशेन व्यभिचारोपि वर्तत इति स्पष्टम् । अन्यथा 'मुनित्रयं नमस्कृत्य तदुक्तीः परिभाव्य च' इत्यत्र चिन्तनार्थकत्वं परिभाव्य इत्यस्य कथं युज्यते? अतः ज्ञापकानां सामान्ये पक्षपातः इति स्वीकृत्य धातूनामनेकार्थत्वम् इति दर्शनं सिद्ध्यति ।

## पच्यर्थेऽनुपपत्तिः परिहारश्च

ननु पच्यादेः विक्लित्त्यनुकूलसन्तपनादिरर्थो सन्तपनादि मात्रं वा? आद्ये विक्लित्तेरेव लाघवात् धात्वर्थत्वं न तु तदनुकूलसन्तपनादेः । नागृहीतविशेषणन्यायात् । तथाहि – "नागृहीतविशेषणा बुद्धिः विशिष्टेषूपजायते" इति हि तन्न्यायः । अर्थात् विशेषणमविषयीकृत्य विशिष्टेबुद्धिर्नोत्पद्यते इति । अतः विशेषणमात्रे शक्तिः लाघवात् । तथैव प्रकृते विशेषणम् अर्थात् विक्लित्तिम् अविषयीकृत्य तदनुकूलसन्तपनादेरविषयीकरणात् विशेषणमात्रे पचेः शक्तिः । द्वितीये अतिप्रसङ्गः । तथाहि – रजकेन आतपे क्रियमाणस्य वस्त्रप्रसारणस्य सन्तपनानर्थान्तरतया तस्यापि पचिधात्वर्थत्वप्रसङ्गात् । न च न सन्तपनमात्रं पच्-धात्वर्थः । नापि विक्लित्त्यादि फलविशिष्टसन्तपनं धात्वर्थः गौरवात् अपि तु विक्लित्तिफलोपलक्षितं यत्सन्तानं स एव धात्वर्थः इति

वाच्यम् । एवञ्च न पूर्वोक्तदोषद्वयमिति वाच्यम् । उपलक्ष्यतावच्छेदक-रूपापरिचये पुनरुक्तातिप्रसङ्गानिवारणात् ।

समाधानम्– पच्-धात्वर्थोऽयम् – सन्तपनान्तरादिव्यावृत्तानुभवसिद्धविशेषावच्छिन्नसन्तापनादिः ।

## अभिनवताण्डवे (स्वमते) आख्यातनिरूपणम्

अक्षादिशब्दवत् नानार्थकत्वम् आख्यातप्रत्ययस्य अभ्युपगम्यते द्वैत-मते । यथा अक्षशब्दः इन्द्रियादि वाचकः तथा आख्यातप्रत्ययोपि कर्त्रादि-वाचकः । तथाहि – "देवदत्तः पचति" इत्यत्र कर्तृवाचकत्वम् । देवदत्तेन तण्डुलः पच्यत इत्यत्र कर्मवाचकत्वम् । देवदत्तेन सुप्यते अथवा आस्यतेत्यत्र भाववाचकत्वम् आख्यातस्य । इदं च स्मृत्यनुकूलम् । यथा स्मृतिः – 'लः कर्मणि च भावे चाकर्मकेभ्यः' इति । तत्रापि कर्तानेकप्रकारतया आख्यातेन अभिधीयते । धात्वर्थानुकूलव्यापारवान् कर्ता । धात्वर्थाश्रयः कर्ता । धात्व-र्थप्रतियोगी कर्ता इति । यथा "पचति" इत्यत्र पाकानुकूलव्यापारः आख्या-तार्थः । रथो गच्छति, देवदत्तो जानाति, इच्छति, यतते, द्वेष्टि इत्यादि-स्थलेषु धात्वर्थबोधगत्याश्रयाः आख्यातार्थाः । घटो नश्यतीत्यादौ नाशरूप-धात्वर्थप्रतियोगित्वादिः आख्यातार्थः । न च सर्वत्र कृतिरेवाख्यातार्थः । रथो गच्छतीत्यत्र च आख्यातस्य लक्षणामाश्रित्य धात्वर्थगमनाश्रयत्वरूपोऽर्थः स्वीक्रियत इति त्वदुक्तरीत्या नाख्यातस्य आश्रयत्वादौ शक्तिरिति वाच्यम् । प्रयोगे समाने रथो गच्छति, चैत्रो गच्छति इत्यादिषु एकत्र शक्तेः अपरत्र लक्षणस्य स्वीकारः असति बाधकेऽनुपपन्नः । अत्र च रथो गच्छतीत्यादिषु मुख्यार्थानुपपत्तिप्रतिसन्धानपूर्वकम् आश्रयत्वादिप्रतिपत्तिर्नास्ति, येनाख्यात-स्य तत्र लक्षणा स्वीक्रियेत । तथैव आख्यातस्य कृतिवाचकत्वे प्रमाणं नास्ति

न च “पचति” इतिप्रयोगजन्यकृत्यनुभव एव आख्यातस्य कृतिवाचकत्वे प्रमाणमिति वाच्यम् । कृत्यनुभवस्य “पचति” इतिप्रयोगजन्यत्वं न सिद्धम् । यतः “पचति” इतिप्रयोगे कश्चन धात्वर्थानुकूलव्यापाराश्रयः इति ज्ञाने उत्पन्ने तल्लिङ्गेन यत्नानुभवः इति अङ्गीकारात् । तर्हि यत्नानुभवः लिङ्गेनेत्युक्ते अनुमितयत्ने शाब्दस्य वर्तमानस्य कथमन्वयः? इति न शङ्क्यम् । इष्टत्वात् । यत्ने वर्तमानत्वबोध एव न भवतीति भावः । अथ च यत्नेऽपि वर्तमानत्वबोधः तदा प्रत्यक्षस्थले यथा चक्षुरिन्द्रियेण पाकानुकूलव्यापारविज्ञानानन्तरम् अनुमिते यत्ने मनसा यद्वर्तमानत्वं गृह्यते तथा शब्देन व्यापारबोधानन्तरम् अनुमिते यत्ने मनसा वर्तमानत्वं गृह्यते इति वक्तुं शक्यत्वात् इति बोध्यम्। अत एव किं करोति देवदत्तः पश्य? इति प्रश्नोप्युपपद्यते । व्यापाराश्रयस्य देवदत्तस्य प्रत्यक्षयोग्यत्वात् ।

अत एव प्रात्यक्षिकपाकानुकूलव्यापाराश्रयत्वविज्ञानस्य “पचति” इत्याकारत्वमुपपन्नम्। अन्यथा तज्ज्ञानं मूकविज्ञानवत् शब्दानुल्लेखि स्यात्। अत एव यदा पाकानुकूलव्यापारः समाप्तः इति ज्ञानं तत्र अपाक्षीदिति प्रयोगः। एवं पाकानुकूलव्यापारस्य भावित्वज्ञानात् पक्ष्यतीतिप्रयोगः उपपद्यते । न च रथः किं करोति पश्य? इत्यपि वचनप्रयोगात् तुल्यरीत्या गत्यनुकूलव्यापाराश्रयत्वमेव आख्यातार्थः स्यात् ।

अथ च यतत इत्यादावपि धात्वर्थानुकूलव्यापाराश्रयत्वमेव आख्यातार्थः स्यादिति वाच्यम् । अन्यथा सिद्धत्वात् । अर्थात् रथः किं करोति? इति करोतिना रथः किंविधक्रियाश्रयः? इति प्रश्ने गच्छतीति गत्याश्रयत्वस्यैव उत्तरत्वमिति वक्तुं शक्यत्वात् । निद्रातीत्यादौ च निद्राद्याश्रयत्वस्यैव भानाच्च । तदनुकूलव्यापाराभावादिति यावत् ।

न च करोतेः यत्नार्थकत्वमिति करोतिना किंविधक्रियाविषयकप्रश्नः नोपपद्यत इति वाच्यम् । क्तिन्नन्त- कृतिशब्दे विद्यमानकृधातोरेव यत्नार्थकत्वेन, अन्यत्र कृधातोः यत्नपरत्वाभावात् । अन्यथा कृधातुत्वाविशेषे कृधातुप्रकृतिकयोः क्रियाकृत्यापदयोः समानार्थकत्वं स्यात् । अत एव धातुव्याख्यानसन्दर्भे डुकृञ् करण इति व्याख्यायते । न तु डुकृञ् कृतौ इति । अपि च नश्यतीत्यादिस्थलेषु किं करोतीति प्रश्ने नश्यतीति यदा उत्तरं तस्यार्थविवरणमेवं क्रियते – नाशवान् इति, न तु नाशं करोतीति । अपि च कर्तरिप्रयोगत्वं लोकसिद्धम् अस्मन्मताङ्गीकार एव युज्यते । देवदत्तः पचति, रथो गच्छति, घटो नश्यतीत्यादिप्रयोगेषु धात्वर्थानुकूलव्यापाराश्रयधात्वर्थाश्रयधात्वर्थरूपप्रतियोगिरूपस्य कर्तृत्वस्य अङ्गीकारात् । अत एव कर्त्रादि वाचकानां देवदत्तादिपदानां तिङन्तेन सामानाधिकरण्यं चोपपन्नं भवति । उभयोरेकार्थबोधकत्वात् । 'कर्तरि शप्' इत्यनेन शबादिप्रत्ययाः उपपन्नाः भवन्ति च । न च यदि धात्वर्थाश्रयः कर्ता तदा "तण्डुलः पचति" इति प्रयोगः स्यात् । तण्डुलस्य पाकानुकूलव्यापाराश्रयत्वेन कर्तृत्वादिति वाच्यम्, अन्यथासिद्धत्वात् । स्थाल्यधःसन्तपनस्यैव पच्धात्वर्थत्वेन श्रपणनिष्ठस्य तस्य तण्डुलनिष्ठत्वाभावात् । एवमनङ्गीकारे तण्डुलस्य परसमवेतक्रियाजन्यफलाश्रयत्वाभावे कर्मत्वमपि न स्यात् । उत्सर्गतः कर्मणः परसमवेतक्रियाजन्यफलशालित्वात् । 'तण्डुले पाकः' इत्यादिप्रयोगे च पाकशब्दः तज्जन्यफले लाक्षणिकः ध्येयः । अथ च यत्र कर्मणः धात्वर्थाश्रयत्वं तत्र कर्मण्यपि कर्तृत्वविवक्षया प्रयोगः उपपद्यते । 'मामहं जानामी'ति प्रयोगस्य सर्वसिद्धत्वात् । किञ्च करणे कर्तृत्वविवक्षायां "काष्ठं पचति" इति प्रयोगः इष्ट एव । तथा "घटं करोति" इत्यत्र कर्ता भवति कुलालः । घटोत्पत्त्यनुकूलक्रियाश्रयत्वात् । "घटो जायते" इत्यत्र च जन्याश्रयत्वेन घटस्यैव कर्तृत्वम् ।

ननु "देवदत्तः पचति" इत्यादिप्रयोगाः कर्तृवाचकत्वात् न कर्तृप्रयोगाः, अपि तु तद्गतसङ्ख्यावाचकत्वात् । तत एव शबादिप्रत्ययाश्च उपपन्नाः । कर्तृवाचकदेवदत्तादिपदस्य आख्यातस्य च भिन्नप्रवृत्तिनिमित्तकत्वे सति एकार्थाभिधायकत्वरूपं सामानाधिकरण्यम् असिद्धम् । "पचति" इत्यनेन कर्तृसङ्ख्यामात्रप्रतीतेः। अन्यादृशस्य च अप्रयोजकत्वात्, तस्य च कर्तरि शक्त्यनुपपादकत्वादिति आक्षेपः ।

समाधानम् – आख्याताभिहितसङ्ख्या कर्तृसङ्ख्या इति न युज्यते । कर्त्रा अनन्वितत्वात् । अनन्वये च कर्तृवाचकदेवदत्तशब्दोत्तरसुबुक्तसङ्ख्या-वरुद्धत्वं कारणम् । न च अनन्वयापत्तिर्नास्ति । आख्यातोक्तसङ्ख्यायाः तृतीयोक्तसङ्ख्यायाश्च एकत्वादिति वाच्यम् । "पचति" इत्युक्ते पाककर्ता एकः इत्यनुभवस्य सर्वेषां जायमानत्वेन तदनुसारेण आख्यातेनैव सङ्ख्यावि-शिष्टः कर्ताभिधीयत इति कल्पना उचिता इति केवलं सङ्ख्यावाचकत्वकल्पना अयुक्ता । किञ्च "देवदत्तस्तण्डुलं पचति" इत्यत्र कर्तुः यथा आख्यातोक्तस-ङ्ख्यायाः धर्म्याकाङ्क्षापूरकत्वं तथा कर्मणोपीति कर्त्रैव सङ्ख्यान्वयः न कर्मणा इति नियमाभावप्रसङ्गः । न च परिह्रियते - "देवदत्तः पचति" इत्यत्र सुबा-ख्यातयोः सामानाधिकरण्यमस्तीति आख्यातोक्तसङ्ख्यायाः कर्त्रैवान्वयोः न कर्मणा इति वाच्यम् । विकल्पासहत्वात् । तथाहि –किं तत् सुबाख्यातयोः सामान्याधिकरण्यं नाम? किं एकसङ्ख्याभिधायकत्वम्? उत भिन्नप्रवृत्तिनि-मित्तकत्वे सति एकार्थवाचिप्रकृत्युत्तरत्वरूपम् । आद्ये साध्यावैशिष्ट्यम् । द्वितीये तु आख्यातप्रकृतिभूतस्य धातोः कर्तृवाचित्वं नास्ति ।

ननु "चैत्रः पचति" इत्यत्र आख्यातोक्तकृतेः कर्तर्यन्वये, तत्पदोक्तस्य अपरस्याप्यर्थस्य तत्रैवान्वयः इति युज्यते आख्याताभिहितसङ्ख्यायाः कर्त्रैवान्वयः न कर्मणि । यतः यं यं भावनाऽनुधावति तं तं सङ्ख्यापीति नियमः

इत्याक्षेपः । विनिगमनाविरहात् इदमयुक्तम् । अर्थात् "पचति" इत्यत्र आख्यातोक्तभावना कर्तारमेवानुधावति । पच्यत इत्यत्र च कर्मैव अनुधावति इति नियमने कारणं नास्ति ।

न चास्ति कारणम् । भावना हि व्यापारः । स च कर्मत्वाद्यनवरुद्धं धर्मिणम् आकाङ्क्षति । कर्मत्वाद्यनवरुद्धः धर्म्यपि क्रियान्वयाय व्यापारमाकाङ्क्षति । ततश्च "चैत्रस्तण्डुलं पचति" इत्यत्र प्रथमान्तपदोपस्थापितः चैत्रः कर्मत्वाद्यनवरुद्धः इति भावना चैत्रमनुधावति न तण्डुलम् । तण्डुलस्य कर्मत्वावरुद्धत्वात् । एवं चैत्रेण पच्यते तण्डुलः इत्यत्र तादृशमनवरुद्धं प्रथमान्तपदोपात्तं तण्डुलमेवानुधावति भावना । आकाङ्क्षावशात् । न तु कर्तारम् । तस्य कर्तृत्वावरुद्धत्वादिति वाच्यम् । चैत्रेण पच्यते तण्डुलः इत्यत्र भावनायाः कर्तर्येवान्वयापातात् । भावनायाः व्यापारत्वेन धर्म्याकाङ्क्षितत्वमस्तीति भावः । न च तृतीयया कर्तृत्वस्योक्तत्वेन न कर्तारमाकाङ्क्षतीति वाच्यम् । कर्तुरेवाश्रयत्वेन कर्तृत्वोक्तौ सुतरां तदाकाङ्क्षितत्वमुचितमेव ।

ननु भावनायाःकेवलं धर्म्याकाङ्क्षितत्वेपि चैत्रस्य न भावनाकाङ्क्षा । चैत्रेणेत्यत्र तृतीयोक्तकर्तृत्वान्तर्गतकृतिरूपभावनावरुद्धत्वात् कर्मणश्च धात्वर्थान्वयाय भावनाकाङ्क्षितत्वात् विषयविषयिभावेनैव भावनाकर्मणोरन्वयादिति आक्षेपः ।

समाधानम् – प्रथमाप्रत्यय-आख्यातप्रत्ययाभ्यां यथा एकैव सङ्ख्याभिधीयते तथा तृतीयाख्याताभ्यां एकभावना एवाभिधीयते इति वक्तुं शक्यत्वात् । अन्यथा चैत्रस्य धात्वर्थान्वयो न स्यात् । यतः तस्य धात्वर्थविषयकाख्यातोक्तभावनारहितत्वं धात्वर्थान्वयितृतीयोक्तभावनान्वयित्वं चास्तीति

किञ्च चैत्रेण तण्डुलः पच्यत इत्यत्र आख्यातोक्तभावनायाः तण्डुलरूप-

कर्मणा आश्रयाश्रयिभावेनान्वयस्य अयोग्यतया तत्प्रत्ययाभिहितसङ्ख्यायाः अपि तण्डुलरूपकर्मणाश्रयाश्रयिभावेनान्वयः न स्यात् । यं यं भावनानुधावति तं तं सङ्ख्या इति नियमात् ।

न च सङ्ख्यायाः भावनानुसारित्वात् सङ्ख्यायाः प्रथमं कर्मान्वये प्राप्ते पश्चात् योग्यताबलात् सङ्ख्यायाः आधाराधेयभावेन कर्तर्यन्वयो भवति वा कर्मणि । यथा कान्तारे समुपस्थिते सहायेन गच्छतः तदत्यये स्वेच्छाविहारः इति वाच्यम् । भावनायाः कर्तर्यप्यन्वयसत्वात् पच्यत इत्यत्रापि सङ्ख्यायाः कर्तर्यन्वयापातात् । अथ भावनाविशेष्ये सङ्ख्यान्वयो भवति यथा "चैत्रः पचति" इत्यत्र भावनाविशेष्यः चैत्रः । तथा हि बोधः – तण्डुलनिष्ठा या विक्लित्तिः, तदनुकूलो यो व्यापारः, तज्जनिका या कृतिः, तदाश्रयश्चैत्रः इति । अतस्तत्रैव चैत्रे सङ्ख्यान्वयः । तथैव चैत्रेण तण्डुलः पच्यत इत्यत्र भावनाविशेष्यः तण्डुलः । तथा हि बोधः – चैत्रनिष्ठा या कृतिः, तज्जन्यो यो व्यापारः, तज्जन्यं यत्फलम्, तदाश्रयस्तण्डुलः इति तण्डुलस्य यथा कथञ्चित् भावनाविशेष्यतया बोधात् । अतस्तत्रैव सङ्ख्यान्वयः – इत्याक्षेपे इदमुत्तरम् ।

एकप्रत्ययोपात्तत्त्वरूपबलात् सङ्ख्याभावनयोः एकत्रैव अन्वयः । तत्रापि भावनाविशेष्ये एव सङ्ख्यान्वयः न तु तद्विशेषणे इति नियमे नियामकविशेषाभावेन अयुक्तत्वात् । किञ्च आख्यातस्य कर्तृकर्मवाचकत्वे अनङ्गीकृते "पचति" इत्यत्र शप्, पच्यते इत्यत्र यक् न स्यात् । तयोः कर्तृकर्मवाचके सार्वधातुके परे एव विधानात् । "देवदत्तः पचति" इत्यत्र अनभिहितत्वेन देवदत्तपदात् तृतीया, तण्डुलः पच्यत इत्यत्र अनभिहितत्वेन तण्डुलपदात् द्वितीयापत्तेश्च ।

न च कर्तृकरणयोस्तृतीया इत्यादिसूत्राणां तिङाद्यनभिहितायां कर्त्रादि-

सङ्ख्यायां विभक्तिविधानात् । प्रकृते च तत्तद्गतसङ्ख्ययोरभिधानात् न तृतीया नापि द्वितीया इति वाच्यम् ।

कृत्तद्धितसमासानां सङ्ख्यानभिधायकत्वेन तत्समभिव्याहारबलात् तिङ्--कृत्-तद्धितसमासैः कर्तर्यनुक्ते तृतीया इत्यादिरीत्या अर्थस्य वक्तव्यत्वात् । अन्यथा कृतः कटः शत्यः कटः शतिकः कटः इत्यादौ कर्मसङ्ख्यायाः कृत्तद्धिताभ्याम् अनभिहितत्वेन कटं कृतः, कटं शत्यः इत्यापद्येत । किञ्च "पचति" इत्यत्र कः इति कर्तृविशेषजिज्ञासा पच्यत इत्यत्र किमिति कर्मविशेषजिज्ञासा च न युक्ता स्यात् । सामान्येन आख्यातेन कर्तृकर्मणोरनभिधानात् । न च कर्तृकर्मणोः लकारवाच्यत्वं नाङ्गीकर्तुं शक्यते । अन्यथा ओदनकामः पचेत इत्यादिस्थले लिङ्बोध्येष्टसाधनत्वं कर्तृनिष्ठतया प्रतीयेत । एकप्रत्ययोपात्तत्वेन कर्तुरेवान्तरङ्गतया तत्रैव तदन्वयस्योचितत्वात् । विवक्षिते धात्वर्थपाकादौ इष्टसाधनत्वबोधश्च च न स्यात् । तदभावे च प्रवृत्त्यभावः स्यादिति वाच्यम् । उच्यते – आत्मेष्टसाधनत्वस्य सर्वदा सिद्धत्वेन तद्बोधने तात्पर्याभावात्, तात्पर्यविवक्षणे च इष्टसाधनत्वस्य यागगतस्यैव बोधयितुमुचितत्वात् । अन्यथा कर्त्रादिगतसङ्ख्यैव आख्याताभिधेया इति वादिनां मते यत्रैव सङ्ख्यान्वयः तत्रैव इष्टसाधनत्वान्वयः इति यागनिष्ठम् इष्टसाधनत्वं न बुद्ध्येत ।

नन्वथापि आख्यातशक्ये कर्तृकर्मणी न । तयोः अन्यपदलभ्यत्वात् । देवदत्ततण्डुलादि- पदलभ्यत्वादिति भावः । अनन्यलभ्यस्यैव शब्दार्थत्वादिति यावत् । तत्रोच्यते – देवदत्तादिपदैः कर्तुः लाभेऽपि देवदत्तत्वादिरूपेण लभ्यत्वम् । न तु कर्तृत्वादिरूपेणेति तेन रूपेण अन्यलभ्यत्वं नास्त्येव । अन्यथा 'चित्रगुः देवदत्तः' इत्यत्र अन्यपदार्थे स्वामिनि त्वदुक्तलक्षणा न स्यात् । अन्यपदार्थस्य स्वामिनः देवदत्तः इति प्रयोगान्तर्गतदेवदत्तपदलभ्य-

त्वात् । सङ्ख्यापि आख्याताभिहिता न स्यात् । तस्यापि अन्यलभ्यत्वात् । प्रातिपदिकोत्तरसुप्प्रत्ययलभ्यत्वादिति भावः ।

न च शब्दार्थस्य अन्यविशेषणतया ज्ञातस्य शब्दार्थैकदेशे अन्वयस्यायोग्यतया व्यापारविशिष्टे यदि आख्यातस्य शक्तिः, तर्हि यागस्य विषयतया व्यापारे साध्यतया व्यापारे अन्वयो न स्यात् । अर्थात् व्यापारसाध्यो याग इति वा, व्यापारविषयो याग इति वा न स्यादिति वाच्यम् । पदान्तरव्युत्पत्तिवैचित्र्यैण आख्यातपदविषये व्युत्पत्तिवैचित्र्यं स्वीकृत्य अन्यस्य विशेषणतया ज्ञातस्य शब्दार्थैकदेशे अन्वयबोधः सम्भवति । यथा देवदत्तस्य नप्ता इत्यत्र नप्तृपदार्थस्य स्वपुत्रपुत्रएकदेशभूतेन पुत्रविशेषणेनापि पुत्रेण देवदत्तस्यान्वयदर्शनात् । अपि च देवदत्तादन्यो यज्ञदत्तः इति यज्ञदत्तविशेषणतया प्रतीतस्य एकदेशभूतस्य भेदस्य सम्बन्धितया देवदत्तस्य प्रतियोगित्वेनान्वयः दृष्टः ।

एवञ्च "देवदत्तस्तण्डुलं पचति" इत्यत्र तण्डुलकर्मकपाककर्ता देवदत्तः इति बोधः । पाककर्तृदेवदत्तयो- रभेदात् । एवं "देवदत्तेन तण्डुलं पच्यते" इत्यत्र देवदत्तकर्तृकपाककर्मतण्डुलः इति बोधः । तण्डुलपाककर्मणोरभेदात् । "देवदत्तेन सुप्यते, आस्यते" इत्यत्र तु देवदत्तकर्तृकस्वापः इत्यादिरर्थः । अत्र आख्यातसङ्ख्या तु अनन्विता एव । स्वापस्य द्वित्वबहुत्वेपि सुप्यत इत्येव प्रयोगदर्शनात् । तर्ह्येकवचनं प्रयोगसाधु न तु अर्थसाधु स्थलविशेषे इति अचेतने मध्यमोत्तमप्रयोगौ न भवतः । युष्मदस्मच्छब्दाविषयत्वात् । यदा तु चेतने उपचारेण युष्मदस्मच्छब्दौ भवतः, तदा तदनुसारिणौ मध्यमोत्तमप्रयोगावपि उपचारेण भवतः इति ज्ञेयम् ।

* * * * * *

## अभिनवताण्डवे उपसर्गार्थनिरूपणे आख्यातविचारः

'प्रादयः गत्याद्यर्थे प्रथमया' इत्यादिवचनान्युल्लिख्य उपसर्गार्थनिरूपण-सन्दर्भे आख्यातविचारः एवं प्रसक्तः । तथाहि –

प्रजपति प्रपचति इत्यादौ धात्वर्थगतप्रकर्षप्रतीतेः उपसर्गप्रयोगान्वयव्य-तिरेकानुविधायित्वात् प्रकर्षोपि प्रादेरर्थः । 'प्रहाराहारसंहारविहारपरिहाराः हरतेरर्थाः' धातूनामनेकार्थत्वात् । उपसर्गाणामपि ते एवार्थाः । न च पौनरु-क्त्यम् । एको, द्वौ, बहवः इत्यादौ प्रकृतिप्रत्ययाभ्यां सङ्ख्यागोचरैकप्रतीतिज-ननात् अपौनरुक्त्यवत् इहापि धातूपसर्गाभ्यां प्रहारविषयैकप्रतीतिजननेन अपौनरुक्त्यसम्भवात् । इदमेव हि पौनरुक्त्यस्य दूषकताबीजम् । यत् ज्ञात-ज्ञापकत्वम् । न च इह तदस्ति । उभाभ्यां मिलित्वा एकस्यैव जननात् । अन्यथा आस्यते देवदत्तेन, एकः, द्वौ, बहवः इत्यादावपि पौनरुक्त्यं स्यात् । एवं स्थाधातुः आराच्छब्दः दूरसमीपयोरिव गति तन्निवृत्योः वाचकः । प्रोप-सर्गस्यापि अनेकार्थत्वात् गतिरर्थः । ततश्च प्रतस्थे इत्यादौ धातूपसर्गौ मिलित्वा एकां बुद्धिं जनयतः । अत एव आख्यातस्य धात्वर्थगत्यन्वितस्वा-र्थबोधकत्वमपि उपपन्नम् । न चान्यतरवैय्यर्थ्यम् । सहभूतयोरेव गतिबुद्धिज-ननस्वाभाव्यात् । एवमन्यत्रापि द्रष्टव्यम् ।

## अभिनवताण्डवे उपसर्गविषये मणिकारमतानुवादः

'द्योतकाः एवोपसर्गाः न वाचकाः' । द्योतकत्वं च धातोः अर्थविशेषे तात्पर्यग्राहकत्वम् । धातोरर्थविशेषे तदुपसन्दानेन शक्तिर्वा । धात्वर्थस्य उपसर्गेणाप्यभिधाने पौनरुक्त्यापातात् ।

किञ्च प्रतिष्ठत इत्यत्र उपसर्गस्य प्रकर्षार्थकत्वे प्रकृष्टगतिनिवृत्तिबोधः स्यात् । न स्याच्च गतिबोधः । न चानेकार्थत्वात् उपसर्गाणां गतिः प्रोपसर्गार्थः

इत्युक्तम् । धातुवैय्यर्थ्यापातात् । न च साधुत्वार्थं धातुप्रयोगः इति युक्तम् । आख्यातस्य प्रकृत्यर्थान्वितस्वार्थबोधकत्वनियमेन आख्यातार्थस्य उपसर्गार्थ-गत्यनन्वयापातात् ।

एवञ्च प्रोत्तरस्थात्वेन गमने शक्तिरिति प्रशब्दः शक्त्यवच्छेदकः न शक्तः इति औपसन्दानिकी शक्तिरेव ।

## अभिनवताण्डवे उपसर्गविषये मणिकारमतखण्डनम्

यदपि तदनुसन्दानेन धातोरर्थविशेषे शक्तिरिति तदपि न । उपसर्गस्य शक्त्युपसन्दानशक्तिकल्पनापेक्षया आवापोद्धापसिद्धा वाचकत्वकल्पनस्यैवोचितत्वात् । अन्यथा विभक्त्युपसन्दानेन प्रातिपदिकस्यैव कर्मत्वादौ शक्तिः न विभक्तेरिति स्यात् ।

यदपि धात्वर्थस्योपसर्गेणाप्यभिधाने पौनरुक्त्यापातः इति तदपि न । एको, द्वौ, बहवः इत्यादौ प्रकृत्यर्थस्यैकत्वादेः प्रत्ययेनाभिधानेऽपि अपौनरुक्त्यवत् इहापि धातूपसर्गाभ्यामेकार्थविषयकैकप्रतीतिजननेन अपौनरुक्त्यसम्भवात् ।

यदपि प्रतिष्ठत इत्यत्र प्रेत्युपसर्गस्य गत्यर्थकत्वे आख्यातार्थाननन्वयः इति तदपि न । धातोरपि गतिवाचकत्वेन धात्वर्थस्य गतेराख्यातार्थान्वयसम्भवात् । अधात्वर्थेनापि कर्त्रादिना आख्यातार्थसङ्ख्यायाः अन्वयस्य त्वयैव अभिधानाच्चेति ।

## उपसंहारः

अस्मिन्विभागे परमतेषु **तर्कताण्डवाद्यनुसारम्** उपस्थापिताः आक्षेपाः सङ्गृह्यन्ते । तथाहि –

**उदयनमते** – आख्यातार्थः यत्नः। तत्र दोषः – आख्यातार्थस्य यत्न-रूपत्वे अचेतने आख्यातो गौणः स्यात्। एवमपरः – पाकानुकूलव्यापारं दृष्ट्वैव 'पाकं करोति' इति प्रयोगः। अत एव किं करोति पश्य इति वक्तारो भवन्ति इति। अतः यत्नस्यातीन्द्रियत्वेन न आख्यातस्य यत्नार्थकत्वम् इति भावः।

**मणिकारमते** – आख्यातार्थः यत्नः । तत्र दोषः – धात्वर्थानुकूलव्या-पारस्य प्रवृत्तिनिमित्तत्वेन सर्वत्र मुख्यत्वसम्भवे चेतने मुख्यः अचेतने त्वमुख्यः इति वृत्तिद्वयकल्पनमयुक्तम् - इति। एवमपरः – आख्यातस्य यत्नार्थत्वे पचति इत्यत्र शप् न स्यात् इत्यादिप्रयोगानुपपत्तिः।

**रत्नकोशकारमते** – आख्यातार्थः उत्पादना। तत्र दोषः – इन्द्रियलि-ङ्गशब्दादौ ज्ञानोत्पाद- कत्वसत्वात् जानाति इति प्रयोगापत्तिः।

**प्राभाकरमते** – आख्यातार्थः सङ्ख्या । तत्र दोषः – प्रतीत्यनुरोधात् धात्वर्थानुकूलव्यापार एव आख्यातार्थः न तु सङ्ख्या।

**मण्डनमते** – फलमेव धात्वर्थः, आख्यातार्थः धात्वर्थानुकूलव्यापारः। तत्र दोषः – फलसाधने प्रवृत्तिविषये अधःसन्तपनादिव्यापारे एव विधिप्रत्ययेन इष्टसाधनत्वं बोध्यमिति फलानुकूलव्यापार एव धात्वर्थः। अतः इदं मतमयु-क्तम्। एवमपरः दोषः – परस्यैव धात्वर्थत्वे विक्लित्यादीनामकर्मकत्वेन पच्या-दीनां धातूनामकर्मकत्वापत्तिः।

**शिरोमणिमते** – आख्यातार्थः यत्नः। दोषः – आख्यातस्य धात्वर्थ-रूपभाववाचित्वेन आत्मनेपदस्य यकश्च भाव्यत्वात् कुरुतः कुर्वन्तीति द्विवच-नबहुवचने न स्याताम्।

**भाट्टमते** –आख्यातार्थः धात्वर्थानुकूलव्यापारः । तत्र दोषः – घटो जायत इत्यत्र घटे जन्यनुकूलव्यापाराभावेन जायत इति आख्यातप्रयोगो न स्यात्। एवम् आख्यातस्य नानार्थत्वम् अपहाय सर्वत्र धात्वर्थानुकूलव्यापार-स्यैव आख्यातार्थत्वाङ्गीकारे पचतीत्यादौ शबादीनामभावप्रसङ्गः।

एवं तर्कताण्डवाद्यनुसारं परमते दोषाः प्रदर्शिताः। (सूचना – एतावन्त एव दोषाः तर्कताण्डवे प्रतिपादिताः इति न। परं नैके दोषाः तत्रोद्भाविताः सूचिताश्च। अत्र तु विभागे केवलम् एकैकस्मिन् मते दोषस्मारणाय दिक्सूच-नम्। एवं तर्कताण्डवे सङ्ख्यायाः वाच्यगामित्वनियमेन कर्तृकर्मणोरपि आख्यातार्थत्वसमर्थनमिति प्रकरणानुवादः, अभिनवताण्डवे च स्वमते आख्यातनिरूपणम् इति प्रकरणानुवादश्च द्रष्टव्यः।)

अत्र इदं निवेद्यते – अत्र प्रबन्धरचने दोषाः स्युरेव। क्षाम्यन्तु सुधियः इति।

अन्ते च अनेन लघुप्रबन्धेन श्रीशेषचन्द्रिकाचार्यगुर्वन्तर्गतव्यासतीर्थ-गुर्वन्तर्गतमध्वेशाभिन्नमूलगोपालकृष्णः प्रीणातु इति सम्प्रार्थ्य विरम्यते।

॥ श्रीमध्वेशार्पणमस्तु ॥

# आकरग्रन्थसूची

१. अनुव्याख्यानम् - श्रीमदानन्दतीर्थभगवत्पादाः - प्रो. के.टि. पाण्डुरङ्गिमहोदयेन संशोध्य प्रकाशितम् । १९९१.

२. अमरकोशः - अमरसिंहः - एम्. रङ्गनाथशर्मणा संशोधितम् - प्रकाशकः काव्यालयः ।

३. कारिकावली - विश्वनाथः - श्री सि. शङ्कररामशास्त्रिणा संशोधितम् - प्रकाशनम् - चौखम्बा- सुरभारतीप्रकाशनम्. १९८८.

४. गोपथब्राह्मणम् - by Rajendralalamitra; Hemchandravidyabhushan, Calcutta, 1872 A.D. (p.12)

५. निरुक्तम् - अज्मेर् नगरे वैदिकग्रन्थालये मुद्रितम् - संवत् १९७६ (पु.१)

६. अग्निपुराणम् - पण्डितश्रीयुक्तपञ्चाननतर्करत्नेन सम्पादितम् । कालिकाताराजधान्याम् अरुणोदयरायेण प्रकाशितम् शकाब्दाः १८१२

७. श्रीमद्भगवत्पतञ्जलिमुनिविरचितं व्याकरणमहाभाष्यम् - राष्ट्रियसंस्कृतसंस्थानम् - २००६

८. Vaiyakarna bhushanasara of Kaundabhatta, edited by Sri Balakrishna Pancholi, Chaukambha Sanskrit Sansthan, Varanasi, 2006 A.D.

९. प्रौढमनोरमा - काशी संस्कृत ग्रन्थमाला - चौखम्बा संस्कृतसंस्थान - २००३

१०. आचार्यभर्तृहरिप्रणीतं वाक्यपदीयम् - सम्पूर्णानन्दसंस्कृतविश्वविद्यालयः - वाराणसी - १९८९

११. नागेशभट्टप्रणीता परमलघुमञ्जूषा - चौखम्बा अमरभारती प्रकाशन, वाराणसी - १९८१

१२. शाब्दतरङ्गिणी - Dvaita Vedanta Studies and Research Foundation, Bengaluru- 2006

१३. श्रीजयन्तभट्टकृता न्यायमञ्जरी - Oriental Research Institute, Mysore - 1983

१४. व्युत्पत्तिवादः - लकारार्थविचारः - पण्डितराजेन वि. सुब्रह्मण्यशास्त्रिणा विरचितेन विवरणेन संवलितः - अण्णामलै विश्वविद्यालयः - १९४८

१५. व्यक्तिविवेकः - श्रीराजानकमहिमभट्टप्रणीतः - गणपतिशास्त्रिना संशोधितः - राजकीय- मुद्रणालये - १९०९

१६. Rasagangadhara of Jagannatha Pandit Edited by Mahamahopadhyaya Durga prasad and Vasudeva Lakshmana Sastri Panasikar; Published by Tukaram Javaji, Nirnaya sagar press, Bombay - 1916.

१७. श्रीमन्न्यायसुधा - षट्टिप्पणीसमेता - प्रकाशिका - विश्वमध्वमहापरिषत् - १९८२

१८. Tarka Tandavam Of Sri Vyasatirtha- Govt. Oriental Library, Mysore - 1938

१९. श्रीसत्यनाथतीर्थश्रीचरणविरचितम् अभिनवताण्डवम् - प्रकाशकः सत्यध्यानरामाचार्यकट्टि- बेङ्गलूरु - १९८८

२०. NATYASHASTRA - of Bharatamuni, Banares Hindu Univer- sity, Varanasi, 1971

२१. The Works of Sri Shankaracharya - Vol 1 Sri vanivilas Press Srirangam; 1910

२२. ब्रह्मसूत्रशाङ्करभाष्यम् - परिमळकल्पतरुभामतीसहिता अनन्तकृष्णशास्त्रिभिः टिप्पणेनोपस्कृतम् – निर्णयसागरप्रेस् (१९३८) पु. १०३

२३. "The Philosophy of Akhyata and its Nature" (Part -1) - By Vedula Subrahmanyam; Andhra University, 26th January 1990 (TTD) (p.11)

२४. महादेवपण्डितैः विरचित न्यायकौस्तुभः (शब्दपरिच्छेदः) - तञ्जावूर् महाराजा शरभोजी सरस्वतीमहल् ग्रन्थालयेन मुद्रितम् (१९८२)

२५. Jijnasadarpanam by Sri Srinivasacharya - Academy of Sanskrit Research - Melkote- 2015.

२६. काशिकावृत्तिः - जयादित्यवामनविरचिता, सम्पादकः डा ॥ सि. नारायणमिश्रः, रत्नापब्लिकेशन्स् वाराणसि, १९८५.

२७. काव्यप्रकाशः - मम्मटभट्टः - प्राच्यविद्यासंशोधनालयः, मैसूरु, १९७७

२८. तर्कसङ्ग्रहः - अन्नंभट्टः - चौखंम्बासंस्कृतसंस्थानम्, वाराणसि, १९९७

२९. तात्पर्यचन्द्रिका - श्रीव्यासतीर्थाः - प्राच्यसंशोधनालयः, मैसूरु-१९३८

३०. दिनकरी - महादेवभट्टः - सि. शङ्कररामशास्त्रिणा संशोधितम् - चौखम्बासुरभारतीप्रकाशनम्- १९८८.

३१. न्यायदर्शनम् - गौतमः - अमरेन्द्रमोहनतर्कतीर्थेन संस्कृतम्- मुशिरं मनोहरपब्लिषरर्स् (प्रै.) १९८५.

३२. न्यायदीपः - श्रीराघवेन्द्रतीर्थाः - व्याख्यानमिदं, Govt. Oriental Library, Mysore - 1938

३३. न्यायपरिशुद्धिः - वेदान्तदेशिकाः - प्रकाशकाः - सम्पत्कुमाराचार्याः - १९४०

३४. प्रकाशः - श्रीराघवेन्द्रतीर्थाः - प्राच्यसंशोधनालयः, मैसूरु, १९३८

३५. मुक्तावली - विश्वनाथतर्कपञ्चाननः - सि. शङ्कररामशास्त्रिणा संशोधितम् - चौखम्बासुरभारती-प्रकाशनम् १९८८.

३५. विष्णुतत्वविनिर्णयटीका - श्रीजयतीर्थाः - श्रीविद्यामान्यतीर्थश्रीपादैः प्रकाशिते दशप्रकरणे -

३६. वैय्याकरणसिद्धान्तलघुमञ्जूषा - नागेशभट्टः - पण्डितमाधवशास्त्रिणा संशोधितम् - चौखम्बासंस्कृतप्रतिष्ठानेन प्रकाशितम्. १९८९

३७. ऋग्वेदप्रातिशाख्यम् - उव्वटभाष्यसहितम् - काशीहिन्दूविश्वविद्यालयग्रन्थमाला - वाराणसी. १९७०.

३८. गूढार्थतत्वालोकः - व्युत्पत्तिवादव्याख्या - बच्चा झा महोदयेन रचिता -

३९. न्यायकुसुमाञ्जलिः - उदयनाचार्यकृतः - केन्द्रीयसंस्कृतविद्यापीठग्रन्थमाला - तिरुपतिः १९८०

४०. पदवाक्यरत्नाकरः - सम्पूर्णानन्दसंस्कृतविश्वविद्यालयः - वाराणसी - १९६०

४१. न्यायकोशः - झळकीकरभीमाचार्यविरचितः - भण्डार्कर्-प्राच्य-विद्यासंशोधनालयः, १९९६

४२. मीमांसान्यायप्रकाशः- आपदेवकृतः - हरिदाससंस्कृतसीरीस् - वाराणसी, १९२५

४३. शब्दशक्तिप्रकाशिका - जगदीशतर्कालङ्कारविरचिता - काशीसं-स्कृतसीरीस् - वाराणसी २००२

४४. श्रीभाष्यम् - रामानुजाचार्यविरचितम् - उभयवेदान्तग्रन्थमाला, मद्रास् - १९६७

४५. सिद्धान्तकौमुदी - भट्टोजिदीक्षितविरचिता - मेहर्चन्दलछमनदास् नवदेहली - १९८५

४६. खण्डदेवभावप्रकाशः - पेरि सूर्यनारायणशास्त्रिणा विरचितः - १९८५

४७. ब्रह्मसूत्रशाङ्करभाष्यम् - चौखम्बासंस्कृतसीरीस् - वाराणसी - १९८२

४८. बृहद्वैय्याकरणभूषणम् - कौण्डभट्टविरचितम् - चौखम्बाअमर-भारतीप्रकाशनम्, वाराणसी - १९८५.

४९. पातञ्जलयोगदर्शनम् - व्यासभाष्यसमेतम् - भारतीयविद्याप्रकाश-नम्, वाराणसी - १९७१

५०. सर्वदर्शनसङ्ग्रहः - विष्णुमूर्तिभट्टः , १९७३

* * * * * *